# पद्यावली[1]

Version 0.1

## रूपगोस्वामिविरचिता

March 24, 2001

[1]Edited by Jan Brzezinski on the basis of the critical edition by S. K. De. (Dhaka: Dhaka University, 1934) The edition edited by Vanamālidāsa Śāstrī with Hindi translation was also consulted. (Vṛndāvana: Rāghavacaitanya Dāsa, 1959)

पद्यावली विरचिता रसिकैर्मुकुन्द-
सम्बन्धबन्धुरपदा प्रमोदोर्मिसिन्धुः ।
रम्या समस्ततमसां दमनी क्रमेण
संगृह्यते कृतिकदम्बककौतुकाय ॥१ ॥

## ग्रन्थप्रारम्भे मङ्गलाचरणम्

नमो नलिननेत्राय
वेणुवाद्यविनोदिने ।
राधाधरसुधापान-
शालिने वनमालिने ॥२ ॥
— कस्यचित्

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यैकमहानिधौ रसिकतां राधादृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥३ ॥
— श्रीसारङ्गस्य

ये गोवर्धनमूलकर्दमरसव्यादष्टबर्हच्छदा
ये वृन्दावनकुक्षिषु व्रजवधूलीलोपधानानि च ।
ये चाभ्यङ्गसुगन्धयः कुवलयापीडस्य दानाम्भसा
ते वो मङ्गलमादिशन्तु सततं कंसद्विषो बाहवः ॥४ ॥
— शुभाङ्कस्य

सायं व्यावर्तमानखिलसुरभिकुलाह्वानसंकेतनामा-
न्यभीरीवृन्दचेतो हठहरणकलासिद्धमन्त्राक्षराणि ।
सौभाग्यं वः समन्ताद्दधतु मधुभिदः केलिगोपालमूर्तेः
सानन्दकृष्टवृन्दावनरसिकमृगश्रेणयो वेणुनादाः ॥५ ॥
— उमापतिधरस्य

## अथ श्रीकृष्णस्य महिमा

अम्भोभिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां
शैली मृत्कणतां तृणं कुलिशतां वज्रं तृणक्षीणताम् ।
वह्निः शीतलतां हिमं वहनतामायाति यस्येच्छया
लीलादुर्ललिताद्भुतव्यसनिनं कृष्णाय तस्मै नमः ॥ ६ ॥
— कस्यचित्

वात्सल्यादभयप्रदानसमयादार्तार्तिनिर्वापणा-
दौदार्यादघशोषणादगणितश्रेयःपदप्रापणात् ।
सेव्यः श्रीपतिरेव सर्वजगतामेते यतः साक्षिणः
प्रह्लादश्च विभीषणश्च करिराट् पाञ्चल्यहल्या ध्रुवः ॥ ७ ॥
— कस्यचित्

## भजन-माहात्म्यम्

व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का
कुब्जायाः किमु नाम रूपमधिकं किं तत् सुदाम्नो धनम् ।
वंशः को विदुरस्य यादवपतेरुग्रस्य किं पौरुषं
भक्त्या तुष्यति केवलं न च गुणैर्भक्तिप्रियो माधवः ॥ ८ ॥
— श्रीदाक्षिणात्यस्य

अनुचितमुचितं वा कर्म कोऽयं विभागो
भगवति परमास्तां भक्तियोगो दृढीयान् ।
किरति विषमहीन्द्रः सान्द्रपीयूषमिन्दु-
र्द्वयमपि स महेशो निर्विशेषं बिभर्ति ॥ ९ ॥
— श्रीविष्णुपुरीपादानाम्

यदि मधुमथन त्वदङ्घ्रिसेवां
हृदि विदधाति जहाति वा विवेकी ।
तदखिलमपि दुष्कृतं त्रिलोके
कृतमकृतं न कृतं कृतं च सर्वम् ॥ १० ॥
— तेषमेव

काषायान्न च भोजनादिनियमान्नो वा वने वासतो
व्याख्यानादथ वा मुनिव्रतभराच्चित्तोद्भवः क्षीयते ।
किन्तु स्फीतकलिन्दशैलतनयातीरेषु विक्रीडतो
गोविन्दस्य पदारविन्दभजनारम्भस्य लेशादपि ॥ ११ ॥
— कस्यचित्

अलमलमियमेव प्राणिनां पातकानां
निरसनविषये या कृष्ण कृष्णेति वाणी ।
यदि भवति मुकुन्दे भक्तिरानन्दसान्द्रा
विलुठति चरणाब्जे मोक्षसाम्राज्यलक्ष्मीः ॥ १२ ॥
— श्रीसर्वज्ञस्य

## प्रेम्नः सौभाग्यम्

नानोपचारकृतपूजनमार्तबन्धोः
प्रेम्णैव भक्तहृदयं सुखविद्रुतं स्यात् ।
यावत्क्षुदस्ति जठरे जरठा पिपासा
तावत्सुखाय भवतो ननु भक्ष्यपेये ॥ १३ ॥
— श्रीरामानन्दरायस्य

कृष्णभक्तिरसभावितमतिः
क्रियतां यदि कुतोऽपि लभ्यते ।
तत्र लौल्यमपि मूल्यमेकलं
जन्मकोटिसुकृतैर्न लभ्यते ॥ १४ ॥
— तस्यैव

ज्ञानमस्ति तुलितं च तुलायां
प्रेम नैव तुलितं तु तुलायाम् ।
सिद्धिरेव तुलितात्र तुलायां
कृष्णनाम तुलितं न तुलायाम् ॥ १५ ॥
— श्रीश्रीधरस्वामिपादानाम्

## अथ नाम-माहात्म्यम्

अंहः संहरदखिलं सकृ-
दुदयादेव सकललोकस्य ।
तरणिरिव तिमिरजलधिं
जयति जगन्मङ्गलं हरेर्नाम ॥१६ ॥
— श्रीलक्ष्मीधराणाम्

चतुर्णां वेदानां हृदयमिदमाकृष्य हरिणा
चतुर्भिर्यद्वर्णैः स्फुटमघटि नारायणपदम् ।
तदेतद्गायन्तो वयमनिशमात्मानमधुना
पुनीमो जानीमो न हरिपरितोषाय किमपि ॥१७ ॥
— कस्यचित्

योगश्रुत्युपपत्तिनिर्जनवनध्यानाध्वसम्भावित-
स्वाराज्यं प्रतिपद्य निर्भयममी मुक्ता भवन्तु द्विजाः ।
अस्माकं तु कदम्बकुञ्जकुहरप्रोन्मीलदिन्दीवर-
श्रेणीश्यामलधामनाम जुषतां जन्मास्तु लक्षावधि ॥१८ ॥
— श्री ईश्वरपुरीपादानाम्

कल्याणानां निधानं कलिमलमथनं पावनं पावनानां
पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रोच्यमानम् ।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये कृष्णनाम ॥१९ ॥
— कस्यचित्

वेपन्ते दुरितानि मोहमहिमा सम्मोहमालम्बते
सातङ्कं नखरजनीं कलयति श्रीचित्रगुप्तः कृती ।
सानन्दं मधुपर्कसम्भृतिविधौ वेधाः करोत्युद्यमं
वक्तुं नाम्नि तवेश्वराभिलषिते ब्रूमः किमन्यत्परम् ॥२० ॥
— कस्यचित्

कः परेतनगरीपुरन्दरः

को भवेदथ तदीयकिङ्करः ।
कृष्णनाम जगदेकमङ्गलं
कण्ठपीठमुररीकरोति चेत् ॥ २१ ॥
— श्री आनन्दाचार्यस्य

चेतोदर्पणमार्जनं भवमहादावाग्निनिर्वापणं
श्रेयःकैरवचन्द्रिकावितरणं विद्यावधूजीवनम् ।
आनन्दाम्बुधिवर्धनं प्रतिपदं पूर्णामृतास्वादनं
सर्वात्मस्नपनं परं विजयते श्रीकृष्णसङ्कीर्तनम् ॥ २२ ॥
— श्रीश्रीभगवतः

ब्रह्माण्डानां कोटिसङ्ख्याधिकाना-
मैश्वर्यं यच्चेतना वा यदंशः ।
आविर्भूतं तन्महः कृष्णनाम
तन्मे साध्यं साधनं जीवनं च ॥ २३ ॥
— केषांचित्

विष्णोर्नामैव पुंसाः शमलमपहरत्पुण्यमुत्पादयच्च
ब्रह्मादिस्थानभोगाद्विरतिमथ गुरोः श्रीपदद्वन्द्वभक्तिम् ।
तत्त्वज्ञानं च विष्णोरिह मृतिजननभ्रान्तिबीजं च दग्ध्वा
संपूर्णानन्दबोधे महति च पुरुषं स्थापयित्वा निवृत्तम् ॥ २४ ॥
— श्रीभगवद्व्यासपादानाम्

नामचिन्तामणिः कृष्ण-
श्चैतन्यरसविग्रहः ।
पूर्णः शुद्धो नित्यमुक्तो
ऽभिन्नत्वान् नामनामिनोः ॥ २५ ॥
— तेषामेव

मधुरमधुरमेतन्मङ्गलं मङ्गलानां
सकलनिगमवल्लीसत्फलं चित्स्वरूपम् ।

सकृदपि परिगीतं श्रद्धया हेलया वा
भृगुवर नरमात्रं तारयेत्कृष्णनाम ॥ २६ ॥
— तेषामेव

स्वर्गार्थीया व्यवसितिरसौ दीनयत्येव लोकान्
मोक्षापेक्षा जनयति जनं केवलं क्लेशभाजम् ।
योगाभ्यासः परमविरसस्तादृशैः किं प्रयासैः
सर्वं त्यक्त्वा मम तु रसना कृष्ण कृष्णेति रौतु ॥ २७ ॥
— कस्यचित्

सदा सर्वत्रास्ते ननु विमलमाद्यं तव पदं
तथाप्येकं स्तोकं न हि भवतरोः पत्रमभिनत् ।
क्षणं जिह्वाग्रस्थं तव तु भगवन्नाम निखिलं
समूलं संभारं कषति कतरत् सेवमानयोः ॥ २८ ॥
— श्रीश्रीधरस्वामिपादानाम्

आकृष्टिः कृतचेतसां सुमनसामुच्चाटनं चांहसाम्
आचण्डालममूकलोकसुलभो वश्यश्च मुक्तिश्रियः ।
नो दीक्षां न च सत्क्रियां न च पुरश्चर्यां मनागीक्षते
मन्त्रोऽयं रसनास्पृगेव फलति श्रीकृष्णनामात्मकः ॥ २९ ॥
— श्रीलक्ष्मीधराणाम्

विचेयानि विचार्याणि
विचिन्त्यानि पुनः पुनः ।
कृपणस्य धनानीव
त्वन्नामानि भवन्तु नः ॥ ३० ॥
— श्रीभवानन्दस्य

नाम्नामकारि बहुधा निजसर्वशक्ति-
स्तत्रार्पिता नियमितः स्मरणे न कालः ।
एतादृशी तव कृपा भगवन्ममापि
दुर्दैवमीदृशमिहाजनि नानुरागः ॥ ३१ ॥

— श्रीभगवतः

## अथ नामकीर्तनम्

तृणादपि सुनीचेन
तरोरिव सहिष्णुना ।
अमानिना मानदेन
कीर्तनीयः सदा हरिः ॥ ३२ ॥
— तस्यैव

श्रीरामेति जनार्दनेति जगतां नाथेति नारायणे-
त्यानन्देति दयापरेति कमलाकान्तेति कृष्णेति च ।
श्रीमन्नाममहामृताब्धिलहरीकल्लोलमग्नं मुहु-
र्मुह्यन्तं गलदश्रुनेत्रमवशं मां नाथ नित्यं कुरु ॥ ३३ ॥
— श्रीलक्ष्मीधराणाम्

श्रीकान्त कृष्ण करुणामय कञ्जनाभ
कैवल्यवल्लभ मुकुन्द मुरान्तकेति ।
नामावलीं विमलमौक्तिकहारलक्ष्मी-
लावण्यवञ्चनकरीं करवाणि कण्ठे ॥ ३४ ॥
— तेषामेव

कृष्ण राम मुकुन्द वामन वासुदेव जगद्गुरो
मत्स्य कच्छप नारसिंह वराह राघव पाहि माम् ।
देवदानवनारदादिमुनीन्द्रवन्द्य दयानिधे
देवकीसुत देहि मे तव पादभक्तिमचञ्चलाम् ॥ ३५ ॥
— कस्यचित्

हे गोपालक हे कृपाजलनिधे हे सिन्धुकन्यापते
हे कंसान्तक हे गजेन्द्रकरुणापारीण हे माधव ।
हे रामानुज हे जगत्त्रयगुरो हे पुण्डरीकाक्ष मां
हे गोपीजननाथ पालय परं जानामि न त्वां विना ॥ ३६ ॥

— श्रीवैष्णवस्य

श्रीनारायण पुण्डरीकनयन श्रीराम सीतापते
गोविन्दाच्युत नन्दनन्दन मुकुन्दानन्द दामोदर ।
विष्णो राघव वासुदेव नृहरे देवेन्द्रचूडामणे
संसारार्णवकर्णधारक हरे श्रीकृष्ण तुभ्यं नमः ॥ ३७ ॥
— तस्यैव

भाण्डीरेश शिखण्डमण्डन वर श्रीखण्डलिप्ताङ्ग हे
वृन्दारण्यपुरन्दर स्फुरदमन्देन्दीवरश्यामल ।
कालिन्दीप्रिय नन्दनन्दन परानन्दारविन्देक्षण
श्रीगोविन्द मुकुन्द सुन्दरतनो मां दीनमानन्दय ॥ ३८ ॥
— श्रीगोपालभट्टानाम्

## श्रीकृष्णकथामाहात्म्यम्

श्रुतमप्यौपनिषदं
दूरे हरिकथामृतात् ।
यन्न सन्ति द्रवच्चित्त-
कम्पाश्रुपुलकादयः ॥ ३९ ॥
— श्रीभगवद्व्यासपादानाम्

नैव दिव्यसुखभोगमर्थये
नापवर्गमपि नाथ कामये ।
यान्तु कर्णविवरं दिने दिने
कृष्णकेलिचरितामृतानि मे ॥ ४० ॥
— श्रीकविरत्नस्य

अहो अहोभिर्न कलेर्विदूयते
सुधासुधारामधुरं पदे पदे ।
दिने दिने चन्दनचन्द्रशीतलं
यशो यशोदातनयस्य गीयते ॥ ४१ ॥

— तस्यैव

नन्दनन्दनकैशोर-
लीलामृतमहाम्बुधौ ।
निमग्नानां किमस्माकं
निर्वाणलवणाम्भसा ॥ ४२ ॥
— श्रीयादवेन्द्रपुरीपादानाम्

त्वत्कथामृतपाथोधौ
विहरन्तो महामुदः ।
कुर्वन्ति कृतिनः केचिच्-
चतुर्वर्गं तृनोपमम् ॥ ४३ ॥
— श्रीश्रीधरस्वामिपादानाम्

तत्रैव गङ्गा यमुना च तत्र
तत्र गोदावरी तत्र सरस्वती च ।
सर्वाणि तीर्थानि वसन्ति तत्र
यत्राच्युतोदारकथाप्रसङ्गः ॥ ४४ ॥
— कस्यचित्
या भुक्तिलक्ष्मीर्भुवि कामुकानां
या मुक्तिलक्ष्मीर्हृदि योगभाजाम् ।
यानन्दलक्ष्मी रसिकेन्द्रमौलेः
सा कापि लीलावतु माधवस्य ॥ ४५ ॥
— श्रीशङ्करस्य

## अथ श्रीकृष्णध्यानम्

फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसङ्घावृतं
गोविन्दं कलवेणुवादनपरं द्वियाङ्गभूषं भजे ॥ ४६ ॥
— श्रीशारदाकारस्य

अंसालम्बितवामकुण्डलधरं मन्दोन्नतभ्रूलतं
किञ्चित्कुञ्चितकोमलाधरपुटं साचिप्रसारेक्षणम् ।
आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा
मुले कल्पतरोस्त्रिभङ्गललितं ध्यायेज्जगन्मोहनम् ॥ ४७ ॥
— कस्यचित्

अधरे विनिहितवंशं चम्पककुसुमेन कल्पितोत्तंसम् ।
विनतं दधानमंसं वामं सततं नमामि जितकंसम् ॥ ४८ ॥
— श्रीपुरुषोत्तमदेवस्य

व्यत्यस्तपादकमलं ललितत्रिभङ्गी-
सौभाग्यमंसविरलीकृतकेशपाशम् ।
पिङ्छावतंसमुररीकृअवंशनाल-
मव्याजमोहनमुपैमि कृपाविशेषम् ॥ ४९ ॥

## अथ भक्तवात्सल्यम्

अतन्द्रितचमूपतिप्रहितहस्तमस्वीकृत-
प्रणीतमणिपादुकं किमिति विस्मृतान्तः पुरम् ।
अवाहनपरिष्क्रियं पतगराजमारोहतः
करिप्रवरबृंहिते भगवतस्त्वरायै नमः ॥ ५० ॥
— श्रीदाक्षिणात्यस्य ।

## श्रीद्रौपदीत्राणे तद्वाक्यम्

तमसि रविरिवोद्यन्मज्जतामप्लवानां
प्लव इव तृष्तानां स्वादुवक्त्रसीव मेघः ।
निधिरिव निधनानां तीव्रदुःखामयानां
भिषगिव कुशलं नो दातुमायाति शौरिः ॥ ५१ ॥
— श्रीव्यासपादानाम्

## अथ तद्भक्तानां माहात्म्यम्

प्रह्लादनारदपराशरपुण्डरीक-

व्यासाम्बरीषशुकशौनकभीष्मदाल्भ्यान् ।
रुक्माङ्गदोद्धवविभीषणफाल्गुनादीन्
पुण्यानिमान् परमभागवतान् नमामि ॥ ५२ ॥
— श्रीदाक्षिणात्यस्य

श्रीविष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्तने
प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने ।
अक्रूरस्त्वभिवन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः
सर्वस्वात्मनिवेदने बलिरभूत्कृष्णाप्तिरेषां परा ॥ ५३ ॥
— कस्यचित्

तेभ्यो नमोऽस्तु भववारिधिजीर्णपङ्क-
संलग्नमोक्षणविचक्षणपादुकेभ्यः ।
कृष्णेति वर्णयुगलश्रवणेन येषा-
मानन्दथुर्भवति नर्तितरोमवृन्दः ॥ ५४ ॥
— औत्कलस्य

हरिस्मृत्याह्लादस्तिमितमनसो यस्य कृतिनः
सरोमाङ्चः कायो नयनमपि सानन्दसलिलम् ।
तमेवाचन्द्रार्कं वह पुरुषधौरेयमवने
किमन्यैस्तैर्भारैर्यमसदनगयागतिपरैः ॥ ५५ ॥
— श्रीसर्वानन्दस्य

त्वद्भक्तः सरितां पतिं चुलुकवत् खद्योतवद्भास्करं
मेरुं पश्यति लोष्ट्रवत् किमपरं भूमेः पतिं भृत्यवत् ।
चिन्तारत्नचयं शिलाशकलवत् कल्पद्रुमं काष्ठवत्
संसारं तृणराशिवत् किमपरं देहं निजं भारवत् ॥ ५६ ॥
— श्रीसर्वज्ञस्य

मीमांसारजसा मलीमसदृशां तावन्न धीरीश्वरे
गर्वोदर्ककुतर्ककर्कशधियां दूरेऽपि वार्ता हरेः ।
जानन्तोऽपि न जानते श्रुतिसुखं श्रीरङ्गिसङ्गाद्दृते

सुस्वादुं परिवेषयन्त्यपि रसं गुर्वी न दर्वी स्पृशेत् ॥ ५७ ॥
— श्रीमाधवसरस्वतीपादानाम्

ज्ञानावलम्बकाः केचि-
त्केचित् कर्मावलम्बकाः ।
वयं तु हरिदासानां
पादत्राणावलम्बकाः ॥ ५८ ॥
— कस्यचित्

## अथ भक्तानां दैन्योक्तिः

नामानि प्रणयेन ते सुकृतिनां तन्वन्ति तुण्डोत्सवं
धामानि प्रथयन्ति हन्त जलदश्यामानि नेत्राञ्जनम् ।
सामानि श्रुतिशुष्कलीं मुरलिकाजातान्यलंकुर्वते
कामानिर्वृतचेतसामपि विभो नाशापि नः शोभते ॥ ५९ ॥
— समाहर्तुः

संसाराम्भसि सम्भृतभ्रमभरे गम्भीरतापत्रय-
ग्राहेणाभिगृहीतमुग्रगतिना क्रोशन्तमन्तर्भयात् ।
दीप्रेणाद्य सुदर्शनेन विबुधक्लान्तिच्छिदाकारिणा
चिन्तासन्ततिरुद्धम् उद्धर हरे मच्चित्तदन्तीश्वरम् ॥ ६० ॥
— समाहर्तुः

विवृतविविधबाधे भ्रान्तिवेगादगाधे
बलवति भवपूरे मज्जतो मे विदूरे ।
अशरणगणबन्धो हा कृपाकौमुदीन्दो
सकृदकृतविलम्बं देहि हस्तावलम्बम् ॥ ६१ ॥
— समाहर्तुः

नृत्यन् वायुविघूर्णितैः स्वविटपैर्गायन्नलीनां रुतै-
र्मुञ्चन्नश्रु मरन्दबिन्दुभिरलं रोमाञ्चवानङ्कुरैः ।
माकन्दोऽपि मुकुन्द मूर्च्छति तव स्मृत्या तु वृन्दावने

ब्रूहि प्राणसमान चेतसि कथं नामापि नायाति ते ॥ ६२ ॥
— श्री ईश्वरपुरीपादानाम्

या द्रौपदीपरित्राणे या गजेन्द्रस्य मोक्षणे ।
मय्यार्ते करुणामूर्ते सा त्वरा क्व गता हरे ॥ ६३ ॥
— श्री औत्कलस्य

दीनबन्धुरिति नाम ते स्मरन्
यादवेन्द्र पतितोऽहमुत्सहे ।
भक्तवत्सलतया त्वयि श्रुते
मामकं हृदयमाशु कल्पते ॥ ६४ ॥
— श्रीजगन्नाथसेनस्य

स्तावकास्तव चतुर्मुखादयो
भावकास्तु भगवन् भवादयः ।
सेवकाः शतमुखादयः सुरा
वासुदेव यदि के तदा वयम् ॥ ६५ ॥
— श्रीधनञ्जयस्य

परमकारुणिको न भवत्परः
परमशोच्यतमो न च मत्परः ।
इति विचिन्त्य हरेः मयि पामरे
यदुचितं यदुनाथ तदाचर ॥ ६६ ॥
— कस्यचित्

भवोद्भवक्लेशकशाशताहतः
परिभ्रमन्निन्द्रियकापथान्तरे ।
नियम्यतां माधव मे मनोहय-
स्त्वदङ्घ्रिशङ्कौ दृढभक्तिबन्धने ॥ ६७ ॥
— कस्यचित्

न ध्यातोऽसि न कीर्तितोऽसि न मनागाराधितोऽसि प्रभो

नो जन्मान्तरगोचरे तव पदाम्भोजे च भक्तिः कृता ।
तेनाहं बहुदुःखभाजनतया प्राप्तो दशामीदृशीं
त्वं कारुण्यनिधे विधेहि करुणां श्रीकृष्ण दीने मयि ॥ ६८ ॥
— श्रीशङ्करस्य

शरणमसि हरे प्रभो मुरारे
जय मधुसूदन वासुदेव विष्णो
निरवधि कलुषौघकारिणं मां
गतिरहितं जगदीश रक्ष रक्ष ॥ ६९ ॥
— कस्यचित्

दिनादौ मुरारे निशादौ मुरारे
दिनार्धे मुरारे निशार्धे मुरारे ।
दिनान्ते मुरारे निशान्ते मुरारे
त्वमेको गतिर्नस्त्वमेको गतिर्नः ॥ ७० ॥
— श्रीदाक्षिणात्यस्य

अयि नन्दतनुज किङ्करं
पतितं मां विषमे भवाम्बुधौ ।
कृपया तव पादपङ्कज
स्थितधूलीसदृशं विचिन्तय ॥
७१ ॥
— श्रीभगवतः

न वयं कवयो न तार्किका
न च वेदान्तनितान्तपारगाः ।
न च वादिनिवारकाः परं
कपटाभीरकिशोरकिङ्कराः ॥ ७२ ॥
— श्रीसार्वभौमभट्टाचार्याणाम्

परिवदतु जनो यथा तथा वा
ननु मुखरो न वयं विचारयामः ।

हरिरसमदिरा मदातिमत्ता
भुवि विलुठाम नटाम निर्विशाम ॥ ७३ ॥
— तेषामेव

नाहं विप्रो न च नरपतिर्नापि वैश्यो न शूद्रो
नाहं वर्णी न च गृहपतिर्नो वनस्थो यतिर्वा ।
किन्तु प्रोद्यन्निखिलपरमानन्दपूर्णामृताब्धे-
र्गोपीभर्तुः पदकमलयोर्दासदासानुदासः ॥ ७४ ॥
— श्रीभगवतः

धन्यानां हृदि भासतां गिरिवरप्रत्यग्रकुञ्जौकसां
सत्यानन्दरसं विकारविभवव्यावृत्तमन्तर्महः ।
अस्माकं किल वल्लवीरतिरसो वृन्दाटवीलालसो
गोपः कोऽपि महेन्द्रनीलरुचिरश्चित्ते मुहुः क्रीडतु ॥ ७५ ॥
— श्री ईश्वरपुरीपादाम्

रसं प्रशंसन्तु कवितनिष्ठा
ब्रह्मामृतं वेदशिरोनिविष्ठाः ।
वयं तु गुट्जाकलिताअतंसं
गृहीतवंशं कमपि श्रयामः ॥ ७६ ॥
— श्रीयादवेन्द्रपुरीपादानाम्

ध्यानातीतं किमपि परमं ये तु जानन्ति तत्त्वं
तेषामास्तां हृदयकुहरे शुद्धचिन्मात्र आत्मा ।
अस्माकं तु प्रकृतिमधुरः स्मेरवक्त्रारविन्दो
मेघश्यामः कनकपरिधिः पङ्कजाक्षोऽयमात्मा ॥ ७७ ॥
— श्रीकविरत्नस्य

जातु प्रार्थयते न पार्थिवपदं नेन्द्रे पदे मोदते
सन्धत्ते न च योगसिद्धिषु धियं मोक्षं च नाकाङ्क्षति ।
कालिन्दीवनसीमनि स्थिरतडिन्मेघदुतौ केवलं
शुद्धे ब्रह्मणि वल्लवीभुजलताबद्धे मनो धावति ॥ ७८ ॥

— तस्यैव

सन्ध्यावन्दन भद्रमस्तु भवतो भोः स्नान तुभ्यं नमो
भो देवाः पितरश्च तर्पणविधौ नाहं क्षमः क्षम्यताम् ।
यत्र क्वापि निषद्य यादवकुलोत्तमस्य कंसद्विषः
स्मारं स्मारमघं हरामि तदलं मन्ये किमन्येन मे ॥ ७९ ॥
— श्रीमाधवेन्द्रपुरीपादानाम्

देवकीतनयसेवकीभवन्
यो भवानि स भवानि किं ततः ।
उत्पथे क्वचन सत्पथेऽपि वा
मानसं व्रजतु दैवदेशितं ॥ ८० ॥
— कस्यचित्

मुग्धं मां निगदन्तु नीतिनिपुणा भ्रान्तं मुहुर्वैदिकाः
मन्दं बान्धवसञ्चया जडधियं मुक्तादराः सोदराः ।
उन्मत्तं धनिनो विवेकचतुराः कामं महादाम्भिकं
मोक्तुं न क्षमते मनागपि मनो गोविन्दपादस्पृहाम् ॥ ८१ ॥
— श्रीमाधवेन्द्रपुरीपादानाम्

श्याममेव परं रूपं
पुरी मधुपुरी वरा ।
वयः कैशोरकं ध्येय-
माद्य एव परो रसः ॥
८२ ॥
— रघुपत्युपाध्यायस्य

पुरतः स्फुरतु विमुक्ति-
श्चिरमिह राज्यं करोतु वैराज्यम् ।
पशुपालबालकपतेः
सेवामेवाभिवाञ्छामि ॥ ८३ ॥
— श्रीसुरोत्तमाचार्यस्य

क्षौणीपतित्वमथवैकमकिञ्चनत्वं
नित्यं ददासि बहुमानमथापमानम् ।
वैकुण्ठवासमथ वा नरके निवासं
हा वासुदेव मम नास्ति गतिस्त्वदन्या ॥ ८४ ॥
— श्रीगर्भकवीन्द्रस्य

दिशतु स्वाराज्यं वा
वितरतु तापत्रयं वापि ।
सुखितं दुःखितमपि मां
न विमुञ्चतु केशवः ॥ ८५ ॥
— श्रीकविराजमिश्रस्य

## अथ भक्तानां सोत्कण्ठाप्रार्थना

नन्दनन्दनपदारविन्दयोः
स्यन्दमानमकरन्दबिन्दवः ।
सिन्धवः परमसौख्यसम्पदां
नन्दयन्तु हृदयं ममानिशम् ॥ ८६ ॥
— श्रीकराचार्याणाम्

इह वत्सान् समचारय-
दिह नः स्वामी जगौ वंशीम् ।
इति सास्रं गदतो मे
यमुनातीरे दिनं यायात् ॥ ८७ ॥
— श्रीरघुपत्युपाध्यायस्य

अनुशीलनकुञ्जवाटिकायां
जघनालम्बितपीतशाटिकायाम् ।
मुरलीकलकूजिते रतायां
मम चेतोऽस्तु कदम्बदेवतायाम् ॥ ८८ ॥
— श्रीगोविन्दस्य

आरक्तदीर्घनयनो नयनाभिरामः
कन्दर्पकोटिललितं वपुरादधानः ।
भूयात् स मेऽद्य हृदयाम्बुरुहाधिवर्ती
वृन्दाटवीनगरनागरचक्रवर्ती ॥ ८९ ॥
— श्रीभवानन्दस्य

लावण्यामृतवन्या
मधुरिमलहरीपरीपाकः ।
कारुण्यानां हृदयं
कपटकिशोरः परिस्फुरतु ॥ ९० ॥
— श्रीसार्वभौमभट्टाचार्याणाम्

भवन्तु तत्र जन्मानि
यत्र ते मुरलीकलः ।
कर्णपेयस्त्वमायाति
किं मे निर्वाणवार्तया ॥ ९१ ॥
— तेषमेव

आस्वाद्यं प्रमदारदच्छदमिव श्रव्यं नवं जल्पितं
बालाया इव दृश्यमुत्तमवधूलावण्यलक्ष्मीरिव ।
प्रोद्घोष्यं चिरविप्रयुक्तवनितासन्देशवाणीव मे
नैवेद्यं चरितं च रूपमनिशं श्रीकृष्ण नामास्तु मे ॥ ९२ ॥
— केषांचित्

नयनं गलदश्रुधारया
वदनं गद्गदरुद्धया गिरा ।
पुलकैर्निचितं वपुः कदा
तव नामग्रहणे भविष्यति ॥
९३ ॥
— श्रीभगवतः

न धनं न जनं न सुन्दरीं

कवितां वा जगदीश कामये ।
मम जन्मनि जन्मनीश्वरे
भवताद्भक्तिरहैतुकी त्वयि ॥
९४ ॥
— तस्यैव

गोवर्धनप्रस्थनवाम्बुवाहः
कलिन्दकन्यानवनीलपद्मम् ।
वृन्दावनोदारतमालशाखी
तापत्रयस्याभिनवं करोतु ॥ ९५ ॥
— श्रीगौडीयस्य

अनङ्गरसचातुरीचपलचारुनेत्राञ्चल-
श्चलन्मकरकुण्डलस्फुरितकान्तिगण्डस्थलः ।
व्रजोल्लसितनागरीनिकररासलास्योत्सुकः
स मे सपदि मानसे स्फुरतु कोऽपि गोपालकः ॥ ९६ ॥
— श्रीमाधवेन्द्रपुरीपादानाम्

## अथ भक्तानाम् उत्कण्ठा

श्रुतयः पलालकल्पाः किम् इह वयं साम्प्रतं चिनुमः ।
आह्रियत पुरैव नयनैराभीरीभिः परं ब्रह्म ॥ ९७ ॥
— श्रीरघुपत्युपाध्ययस्य

कं प्रति कथयितुमीशे
सम्प्रति को वा प्रतीतिमायातु ।
गोपतितनयाकुञ्जे
गोपवधूटीविटं ब्रह्म ॥ ९८ ॥
— तस्यैव

ज्ञातं काणभुजं मतं परिचितैवान्वीक्षिकी शिक्षिता
मीमांसा विदितैव साङ्ख्यसरणिर्योगे वितीर्णा मतिः ।

वेदान्तां परिशीलिताः सरभसं किं तु स्फुरन्माधुरी-
धारा काचन नन्दसूनुमुरली मच्चित्तमाकर्षति ॥९९ ॥
— श्रीसार्वभौमभट्टाचार्याणाम्

अमरीमुखसीधुमाधुरीणां
लहरी काचन चातुरी कलानाम् ।
तरलीकुरुते मनो मदीयं
मुरलीनादपरम्परा ॥१०० ॥
— तेषामेव

अपहरति मनो मे कोऽप्ययं कृष्णचौरः
प्रणतदुरितचोरः पूतनाप्राणचौरः ।
वलयवसनचौरो बालगोपीजनानां
नयनहृदयचौरः पश्यताम् सज्जनानाम् ॥१०१ ॥
— कस्यचित्

अलं तिर्दिववार्तया किमिति सार्वभौमश्रिया
विदूरतरवर्तिनी भवतु मोक्षलक्ष्मीरपि ।
कलिन्दगिरिनन्दिनीतटनिकुञ्जपुञ्जोदरे
मनो हरति केवलं नवतमालनीलं महः ॥१०२ ॥
— श्रीहरिदासस्य

अवलोकितमनुमोदित-
मालिङ्गितमङ्गनाभिरनुरागैः ।
अधिवृन्दावनकुञ्जं
मरकतपुञ्जं नमस्यामः ॥१०३ ॥
— श्रीसर्वविद्याविनोदानाम्

कदा द्रक्ष्यामि नन्दस्य
बालकं नीपमालकम् ।
पालकं सर्वसत्त्वानां
लसत्तिलकभालकम् ॥१०४ ॥

— श्रीमाधवेन्द्रपुरीपादानाम्

कदा वृन्दारण्ये मिहिरदुहितुः सङ्गमाहिते
मुहुर्भ्रामं भ्रामं चरितलहरीं गोकुलपतेः ।
लपन्नुच्चैरुच्चैर्नयनपयसां वेणिभिरहं
करिष्ये सोत्कण्ठं निबिडमुपसेकं विटपिनाम् ॥ १०५ ॥
— समाहर्तुः

दुरारोहे लक्ष्मीवति भगवतीनामपि पदं
दधाना धम्मिल्ले नटतिओ कठिने योपनिषदाम् ।
रुतिर्वंशीजन्मा धृतमधुरिमा सा मधुरिपो-
रकस्मादस्माकःअ श्रुतिशिखरमारोक्ष्यति ॥ १०६ ॥
— समाहर्तुः

उत्फुल्लतापिञ्छमनोरमश्री-
र्मातुः स्तनयस्तमुखारविन्दः ।
सञ्चालयन् पादसरोरुहाग्रं
कृष्णः कदा यास्यति दृक्पथं मे ॥ १०७ ॥
— कस्यचित्

## अथ मोक्षानादरः

भक्तिः सेवा भगवतो
मुक्तिस्तत्पदलङ्घनम् ।
को मूढो दासतां प्राप्य
प्राभवं पदमिच्छति ॥ ११० ॥
— श्रीशिवमौनिनाम्

भवबन्धच्छिदे तस्यै
स्पृहयामि न मुक्तये ।
भवान् प्रभुरहं दास
इति यत्र विलुप्यते ॥ १११ ॥

— श्रीहनुमतः

हन्त चित्रीयते मित्र
स्मृत्वा तान् मम मानसम् ।
विवेकिनोऽपि ये कुर्यु-
स्तृष्णामात्यन्तिके लये ॥ ११२ ॥
— केषांचित्

का त्वं मुक्तिरुपागतास्मि भवती कस्मादकस्मादिह
श्रीकृष्णस्मरणेन देव भवती दासीपदं प्रापिता ।
दूरे तिष्ठ मनागनागसि कथं कुर्यादनार्यं मयि
त्वद्गन्धान्निजनामचन्दनरसालेपस्य लोपो भवेत् ॥ ११३ ॥
— कस्यचित्

अर्च्ये विष्णौ शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धि-
र्विष्णोर्वा वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिः ।
श्रीविष्णोर्नाम्नि मन्त्रे सकलकलुषहे शब्दसामान्यबुद्धि-
र्विष्णौ सर्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी सः ॥ ११४ ॥
— श्रीदाक्षिणात्यस्य ।

हत्यां हन्ति यदङ्घ्रिसङ्गतुलसी स्तेयं च तोयं पदो-
र्नैवेद्यं बहुमद्यपानदुरितं गुर्वङ्गनासङ्गजम् ।
श्रीशाधिनमतिः स्थितिर्हरिजनैस्तत्सङ्गजं किल्बिषं
शालाग्रामशिलानृसिंहमहिमा कोऽप्येष लोकोत्तरः ॥ ११५ ॥
— श्रीआगमस्य

## अथ नैवेद्यार्पणे विज्ञप्तिः

द्विजस्त्रीणां भक्ते मृदुनि विदुरान्ने व्रजगवां
दधिक्षेरे सख्युः स्फुटचिपिटमृष्टौ मुररिपो ।

यशोदायाः स्तन्ये व्रजयुवतिदत्ते मधुनि ते
यथासीदामोदस्तमिममुपहारेऽपि कुरुताम् ॥ ११६ ॥
— श्रीरामानुजस्य

या प्रीतिर्विदुरार्पिते मुररिपो कुन्त्यर्पिते यादीर्शी
या गोवर्धनमूर्ध्नि या च पृथुके स्तने यशोदार्पिते ।
भारद्वाजसमर्पिते शबरिकादत्तेऽधरे योषितां
या वा ते मुनिभामिनीविनिहितेऽन्नेऽत्रापि तामर्पये ॥ ११७ ॥
— कस्यचित्

क्षीरे श्यामलयार्पिते कमलया विश्राणिते फाणिते
दत्ते लड्डूनि भद्रया मधुरसे सोभाभया लम्भिते ।
तुष्टिर्या भवतस्ततः शतगुणां राधानिदेशान्मया
नस्तेऽस्मिन् पुरतस्त्वमर्पय हरे रम्योपहारे रतिम् ॥ ११८ ॥
— समाहर्तुः

## अथ श्रीमथुरामहिमा

हे मातुर्मथुरे त्वमेव नियतं धन्यासि भूमीतले
निर्व्याजं नतयः शतं सविधयस्तुभ्यं सदा सन्तु नः ।
हित्वा हन्त नितान्तमद्भुतगुणं वैकुण्ठमुत्कण्ठया
त्वय्यम्भोजविलोचनः स भगवान् येनावतीर्णो हरिः ॥ ११९ ॥
— कस्यचित्

अत्रासीत्किल नन्दसद्म शकटस्यात्राभवद्भञ्जनं
बन्धच्छेदकरोऽपि दामभिरभूद्बद्धोऽत्र दामोदरः ।
इत्थं मथुरावृद्धवक्त्रविगलत्पीयूषधारां पिबन्
नान्दाश्रुधरः कदा मधुपुरीं धन्यश्चरिष्याम्यहम् ॥
— श्रीकविशेखरस्य

यत्राखिलादिगुरुरम्बुजसम्भवोऽपि
स्तम्बात्मना जनुरनुस्पृहयाम्बभूव ।
चक्रध्वजाङ्कुशलसत्पदराजिरम्या
सा राजतेऽद्य मथुरा हरिराजधानी ॥ १२१ ॥
— कस्यचित्

बीजं मुक्तितरोरनर्थ पटलीनिस्तारकं तारकं
धाम प्रेमरसस्य वाञ्छितधुरासम्पारकं पारकम् ।
एतद्यत्र निवासिनामुदयते चिच्छक्तिवृत्तिद्वयं
मथ्नातु व्यसनानि माथुरपुरी सा वः श्रियं च क्रियात् ॥
१२२ ॥
— समाहर्तुः

वितरति मुरमर्दनः प्रभुस्ते
न हि भजमानजनाय यं कदापि ।
वितरसि बत भक्तियोगमेतं
तव मथुरे महिमा गिरामभूमिः ॥ १२३ ॥
— तस्यैव

श्रवणे मथुरा नयने मथुरा
वदने मथुरा हृदये मथुरा ।
पुरतो मथुरा परतो मथुरा
मधुरा मधुरा मथुरा मथुरा ॥ १२४ ॥
— श्रीगोविन्दमिश्राणाम्

## अथ श्रीवृन्दाटवीवन्दनम्

त्वं भज हिरण्यगर्भं
त्वमपि हरं त्वं च तत्परं ब्रह्म ।
विनिहितकृष्णानन्दाम्
अहं तु वृन्दाटवीं वन्दे ॥ १२५ ॥
— कस्यचित्

## अथ श्रीनन्दप्रणामः

श्रुतिमपरे स्मृतिमितरे
भारतमन्ये भजन्तु भवभीताः ।
अहमिह नन्दं वन्दे
यस्यालिन्दे परं ब्रह्म ॥१२६ ॥
— रघुपत्युपाध्यायस्य

बन्धूकारुणवसनं
सुन्दरकूर्चं मुकुन्दहृतनयनम् ।
नन्दं तुन्दिलवपुषं
चन्दनगौरात्वषं वन्दे ॥१२७ ॥
— समाहर्तुः

अङ्कगपङ्कजनाभां
नवघनाभां विचित्ररुचिसिचयाम् ।
विरचितजगत्प्रमोदां
मुहुर्यशोदां नमस्यामि ॥१२८ ॥
— समाहर्तुः

## अथ श्रीकृष्णशैशवम्

अतिलोहितकरचरणं
मञ्जुलगोरोचनातिलकम् ।
हठपरिवर्तितशकटं
मुररिपुमुत्तानशायिनं वन्दे ॥१२९ ॥
— कस्यचित्

अर्धोन्मीलितलोचनस्य पिबतः पर्याप्तमेकं स्तनं
सद्यः प्रस्तुतदुग्धदिग्धमपरं हस्तेन सम्मार्जतः ।
मात्रा चाङ्गुलिलालितस्य वदने स्मेरायमाने मुहु-
र्विष्णोः क्षीरकणोरुधामधवला दन्तद्युतिः पातु वः ॥१३० ॥

— श्रीमङ्गलस्य

गोपेश्वरीवदनफूत्कृतिलोलनेत्रं
जानुद्वयेन धरणीमनु सञ्चरन्तम् ।
कञ्चिन्नवस्मितसुधामधुराधराभं
बालं तमालदलनीलमहं भजामि ॥१३१ ॥
— श्रीरघुनाथदासस्य

क्वाननं क्व नयनं क्व नासिका
क्व श्रुतिः क्व शिखेति देशितः ।
तत्र तत्र निहिताङ्गुलीदलो
वल्लवीकुलमनन्दयत्प्रभुः ॥१३२ ॥
— श्रीकविसार्वभौमस्य

इदानीमङ्गमक्षालि
रचितं चानुलेपनम् ।
इदानीमेव ते कृष्ण
धूलिधूसरितं वपुः ॥१३३ ॥
— सार्वभौमभट्टाचार्याणाम्

पञ्चवर्षमतिलोलमङ्गने
धावमानमलकाकुलेक्षणम् ।
किङ्किणीवलयहारनूपुरं
रञ्जितं नमत नन्दनन्दनम् ॥१३४ ॥
— आगमस्य

## अथ शैशवे तारुण्यम्

अधरमधुरे कण्ठं कण्ठे सचाटु दृशौ दृशो-
रलिकमलिके कृत्वा गोपीजनेन ससम्भ्रमम् ।
शिशुरिति रुदन् कृष्णो वक्षःस्थले निहितश्चिरा-
न्निभृतपुलकः स्मेरः पायात् स्मरालसविग्रहः ॥१३५ ॥

— दिवाकरस्य

ब्रूमस्त्वच्चरितं तवाधिजननि च्छद्मातिबाल्याकृते
त्वं यादृग्गिरिकन्दरेषु नयनानन्दः कुरङ्गीदृशाम् ।
इत्युक्तः परिलेहनच्छलतया न्यस्ताङ्गुलिः स्वानने
गोपीभिः पुरतः पुनातु जगतीमुत्तानसुप्तो हरिः ॥ १३६ ॥
— वनमालिनः

वनमालिनि पितुरङ्के
रचयति बाल्योचितं चरितम् ।
नवनवगोपवधूटी
स्मितपरिपाटी परिस्फुरति ॥ १३७ ॥
— श्रीमुकुन्दभट्टाचार्यस्य

नीतं नवनवनीतं किय-
दिति कृष्णो यशोदया पृष्टः ।
इयदिति गुरुजनसविधे
विधृतधनिष्ठापयोधरः ॥ १३८ ॥
— कस्यचित्

क्व यासि ननु चौरिके प्रमुषितं स्फुटं दृश्यते
द्वितीयमिह मामकं वहसि कञ्चुके कन्दुकम् ।
त्यजेति नवगोपिकाकुचयुगं निमथ्नन् बला-
ल्लसत्पुलकमण्डलो जयति गोकुले केशवः ॥ १३९ ॥
— दीपकस्य

## अथ गव्यहरणम्

दूरदृष्टनवनीतभाजनं
जानुचङ्क्रमणजातसम्भ्रमम् ।
मातृभीतिपरिवर्तितानननं
केशवं किमपि शैशवं भजे ॥ १४० ॥

— कस्यचित्

सम्मुष्णन् नवनीतमन्तिकमणिस्तम्भे स्वबिम्बोद्गमं
दृष्ट्वा मुग्धतया कुमारमपरं सञ्चिन्तयन् शङ्कया ।
मन्मित्रं हि भवान् मयात्र भवतो भागः समः कल्पितो
मा मां सूचय सूचयेत्यनुनयन् बालो हरिः पातु वः ॥१४१
॥
— केषांचित्

दधिमथननिनादैस्त्यक्तनिद्रः प्रभाते
निभृतपदमगारं वल्लवीनां प्रविष्टः ।
मुखकमलसमीरैराशु निर्वाप्य दीपान्
कवलितनवनीतः पातु मां बालकृष्णः ॥१४२ ॥
— कस्यचित्

सव्ये पाणौ नियमितरवं किञ्किणीदाम धृत्वा
कुब्जीभूय प्रपदगतिभिर्मन्दमन्दं विहस्य ।
अक्ष्णोर्भङ्ग्या विहसितमुखीर्वारयन् सम्मुखीना
मातुः पश्चादहरत हरिर्जातु हैयङ्गवीनम् ॥१४३ ॥
— श्रीश्रीमतः

पदन्यासान् द्वाराञ्चलभुवि विधाय त्रिचतुरान्
समन्तादालोलं नयनयुगलं दिक्षु विकिरन् ।
स्मितं बिभ्रद्व्यक्तं दधिहरणलीलाचटुलधीः
सशङ्कं गोपीनां मधुरिपुरगारं प्रविशति ॥१४४ ॥
— समाहर्तुः

मृद्नन् क्षीरादिचौर्यान्मसृणसुरभिणी सृक्कणी पाणिधर्षै-
राघ्रायाघ्राय हस्तं सपदि परुषयन् किङ्किणीमेखलायाम् ।
वारं वारं विशाले दिशि दिशि विकिरंल्लोचने लोलतारे
मन्दं मन्दं जनन्याः परिसरमयते कूटगोपालबालः ॥१४५
॥

— कस्यचित्

## अथ हरेः स्वप्नायितम्

शम्भो स्वागतमास्यतामित इतो वामेन पद्मोद्भव
क्रौञ्चारे कुशलं सुखं सुरपते वित्तेश नो दृश्यते ।
इत्थं स्वप्नगतस्य कैटभरिपोः श्रुत्वा जनन्या गिरः
किं किं बालक जल्पसीत्यनुचितं थूथूत्कृतं पातु वः ॥१४६
॥

— मयूरस्य

धीरा धरित्रि भाव भारमवेहि शान्तं
नन्वेष कंसहतकं विनिपातयामि ।
इत्यद्भुतस्तिमितगोपवधूश्रुतानि
स्वप्नायितानि वसुदेवशिशोर्जयन्ति ॥१४७ ॥

— सुदेवस्य

## अथ पित्रोर्विस्मापनशिक्षणादि

कालिन्दीपुलिने मया न न मया शीलोपशल्ये न न
न्यग्रोधस्य तले मया न न मया राधापितुः प्राङ्गने ।
दृष्टः कृष्ण इतीरिते सनियमं गोपैर्यशोदापते-
र्विस्मेरस्य पुरो हसन् निजगृहान् निर्यन् हरिः पातु वः ॥
१४८ ॥

— उमापतिधरस्य

वत्स स्थवरकन्दरेषु विचरन् दूरप्रचारे गवां
हिंस्रान् वीक्ष्य पुरः पुराणपुरुषं नारायणं ध्यास्यसि ।
इत्युक्तस्य यशोदया मुरारिपोरव्याज्जगन्ति स्फुर-
द्बिम्बोष्ठद्वयगाढपीडनवशादव्यक्तभावं स्मितम् ॥१४९ ॥

— अभिनन्दस्य

रामो नाम बभूव हुं तदबला सीतेति हुं तां पितु-

र्वाचा पञ्चवटीवने निवसतस्तस्याहरद्रावणः ।
कृष्णस्येति पुरातनीं निजकथामाकर्ण्य मात्रेरितां
सौमित्रे क्क धनुर्धनुर्धनुरिति व्यग्रा गिरः पान्तु वः ॥१५० ॥
— कस्यचित्

श्यामोच्चन्द्रा स्वपिति न शिशो नैति मामम्ब निद्रा
निद्राहेतोः शृणु कथां कामपूर्वां कुरुष्व ।
व्यक्तः स्तम्भान् नरहरिरभूद्दानवं दारयिष्य-
न्नित्युक्तस्य स्मितमुदयते देवकीनन्दनस्य ॥१५१ ॥
— सर्वानन्दस्य

## अथ गोरक्षादिलीला

देवस्त्वामेकजङ्घावलयितगुडीमूर्ध्नि विन्यस्तबाहु
र्गायन् गोयुद्धगीतिरुपरचितशिरःशेखरः प्रग्रहेण ।
दर्पस्फूर्जन्महोक्षद्वयसमरकलाबद्धदीर्घानुबन्धः
क्रीडागोपालमूर्तिर्मुररिपुरवतादात्तगोरक्षलीलः ॥१५२ ॥
— योगेश्वरस्य

यावद्गोपा मधुरमुरलीनादमत्ता मुकुन्दं
मन्दस्पन्दैरहह सकलैर्लोचनैरापिबन्ति ।
गावस्तावन्मसृणयवसग्रासलुब्धा विदूरं
याता घोवर्धनगिरिदरीद्रोणिकाभ्यन्तरेषु ॥१५३ ॥
— श्रीकेशवच्छत्रिणः

### अथ गोपीनां प्रेमोत्कर्षः

धैर्यं नामपरिग्रहेऽपि जघने यद्यंशुकालम्बनं
गोपीनां च विवेचनं निधुवनारम्भे रहोमार्गणम् ।
साध्वीसच्चरितं विलासविरतौ पत्युर्गृहान्वेषणं
तत्तद्गौरवरक्षणं मुररिपोर्वंशीरवापेक्षणम् ॥१५४ ॥
— सर्वविद्याविनोदानाम्

विलोक्य कृष्णं व्रजवामनेत्राः
सर्वेन्द्रियाणां नयनत्वमेव ।
आकर्ण्य तद्वेणुनिनादभङ्गी-
मैच्छन् पुनस्ताः श्रवणत्वमेव ॥ १५५ ॥
— कस्यचित्

## अथ गोपीभिः सह लीला

कालिन्दीजलकेलिलोलतरुणीरावीतचीनांशुका
निर्गत्याङ्गजलानि सारितवतीरालोक्य सर्वा दिशः ।
तीरोपान्तमिलन्निकुञ्जभवने गूढं चिरात् पश्यतः
शौरेः सम्भ्रमयन्न् इमा विजयते साकूतवेणुर्ध्वनिः ॥ १५६ ॥
— पुरुषोत्तमदेवस्य

## तासु कृष्णस्य भावः

स्वेदाप्लावितपाणिपद्ममुकुलप्रक्रान्तकम्पोदया-
द्विस्रस्तामविजानतो मुरलिकां पादारविन्दोपरि ।
लीलावेल्लितवल्लवीकवलितस्वान्तस्य वृन्दावने
जीयात्कंसरिपोस्त्रिभङ्गवपुषः शून्योदयः फूत्कृतिः ॥ १५७ ॥
— चिरञ्जीवस्य

## श्रीकृष्णस्य प्रथमदर्शने राधाप्रश्नः

भ्रूवल्लिताण्डवकलामधुराननश्रीः
कङ्केल्लिकोरककरम्बितकर्णपूरः ।
कोऽयं नवीननिकषोपलतुल्यवेषो
वंशीरवेण सखि मामवशीकरोति ॥ १५८ ॥
— कस्यचित्

इन्दीवरोदरसहोदरमेदुरश्री-
र्वासो द्रवत्कनकवृन्दनिभं दधानः ।

आमुक्तमौक्तिकमनोहरहारवक्षाः
कोऽयं युवा जगदनङ्गमयं करोति ॥१५९ ॥
— सर्वविद्याविनोदानाम्

## सख्या उत्तरम्

अस्ति कोऽपि तिमिरस्तनन्धयः
किञ्चिदञ्चितपदं स गायति ।
यन् मनागपि निशम्य का वधू-
र्नावधूतहृदयोपजायते ॥१६० ॥
— कस्यचित्

## श्रीराधायाः पूर्वरागः

मनोगतां मन्मथबाणबाधा-
मावेदयन्तीव तनोर्विकारैः ।
दीनाननना वाचमुवाच राधा
तदा तदालीजनसम्मुखे सा ॥१६१ ॥
— श्रीपुरुषोत्तमदेवस्य

यदवधि यामुनकुञ्जे धनरुचिरवलोकितः कोऽपि ।
नलिनीदल इव सलिलं तदवधि तरलायते ॥१६२ ॥
— कविचन्द्रस्य

अकस्मादेकस्मिन् पथि सखि मया यामुनतटं
व्रजन्त्यो दृष्टो यो नवजलधरश्यामलतनुः ।
स दृग्भङ्ग्या किं वाकुरुत न हि जाने तत इदं
मनो मे व्यालोलं क्वचन गृहकृत्यो न लगते ॥१६३ ॥
— जयन्तस्य

पुरो नीलज्योत्स्ना तदनु मृगनाभीपरिमल-
स्ततो लीलावेणुक्वणितमनु काण्चीकलरवः ।
ततो वोदुइद्वल्लीवलयितचमत्कारलहरी

तरङ्गाल् लावण्यं तदनु सहजानन्द उदगात् ॥१६४ ॥
— कस्यचित्

अद्य सुन्दरि कलिन्दनन्दिनी
तीरकुञ्जभुवि केलिलम्पटः ।
वादयन् मुरलिकां मुहुर्मुहु-
र्माधवो हरति मामकं मनः ॥१६५ ॥
— कस्यचित्

यदवधि यमुनायास्तीरवानीरकुञ्जे
मुररिपुपदलीला लोचनाभ्यामलोकि ।
तदवधि मम चित्तं कुत्रचित् कार्यमात्रे
न हि लगति मुहूर्तं किं विधेयं न जाने ॥१६६ ॥
— कविचन्द्रस्य

यदवधि यदुनन्दनाननेन्दुः
सहचरि लोचनगोचरीबभूव ।
तदवधि मलयानिलेऽनले वा
सहजविचारपराङ्मुखं मनो मे ॥१६७ ॥
— सञ्जयकविशेखरस्य

असमञ्जसमसमञ्जसम्
असमञ्जसमेतदापतितम् ।
वल्लवकुमारबुद्ध्या
हरि हरि हरिरीक्षितः कुतुकात् ॥१६८ ॥
— शरणस्य

शुष्यति मुखमूरुयुगं पुष्यति
जडतां प्रवेपते हृदयम् ।
स्विद्यति कपोलपाली सखि
वनमाली किमालोकि ॥१६९ ॥
— मुकुन्दभट्टाचार्यस्य

उपरि तमालतरोः सखि
परिणतशरदिन्दुमण्डलः कोऽपि ।
तत्र च मुरलीखुरली
कुलमर्यादामधो नयति ॥ १७० ॥
— सञ्जयकविशेखरस्य

हन्त कान्तमपि तं दिदृक्षते
मानसं मम न साधु यत्कृते ।
इन्दुरिन्दुमुखि मन्दमारुत-
श्चन्दनं च वितनोति वेदनां ॥ १७१ ॥
— कस्यचित्

गुरुजनगञ्जनमयशो
गृहपतिचरितं च दारुणं किमपि ।
विस्मारयति समस्तं
शिव शिव मुरली मुरारातेः ॥ १७२ ॥
— सर्वविद्याविनोदानाम्

द्रविणं भवनमपत्यं ताव-
न्मित्रं तथाभिजात्यं च ।
उपयमुनं वनमाली
यावन्नेत्रे न नर्तयति ॥ १७३ ॥
— तेषामेव

तृप्यन्तु मे छिद्रमवाप्य शत्रवः
करोतु मे शास्तिभरं गृहेश्वरः ।
मणिस्तु वक्षोरुहमध्यभूषणं
ममास्तु वृन्दावनकृष्णचन्द्रमा ॥ १७४ ॥
— कस्यचित्

स्वामी निहन्तु विहसन्तु पुरः सपत्न्यो
भर्तुर्भजन्तु गुरवः पितरश्च लज्जाम् ।

एतावता यदि कलङ्कि कुलं तथास्तु
रामानुजे मम तनोतु मनोऽनुरागम् ॥ १७५ ॥
— कस्यचित्

स्वामी कुप्यति कुप्यतां परिजना निन्दन्ति निन्दन्तु मा-
मन्यत् किं प्रथतामयं च जगति प्रोढो ममोपद्रवः ।
आशास्यं पुनरेतदेव यदिदं चक्षुश्चिरं वर्धतां
येनेदं परिपीयते मुररिपोः सौन्दर्यसारं वपुः ॥ १७६ ॥
— पुष्कराक्षस्य

किं दुर्मिलेन मम दूति मनोरथेन
तावन्ति हन्त सुकृतानि कया कृतानि ।
एतावदेव मम जन्मफलं मुरारि-
र्यन्नेत्रयोः पथि बिभर्ति गतागतानि ॥ १७७ ॥
— कस्यचित्

सखि मम नियतिहताया-
स्तद्दर्शनभाग्यमस्तु वा मा वा ।
पुनरपि स वेणुनादो
यदि कर्णपथे पतेत्तदेवालम् ॥ १७८ ॥
— कस्यचित्

ताराभिसारक चतुर्थनिशाशशाङ्क
कामाम्बुराशिपरिवर्धन देव तुभ्यम् ।
अर्घो नमो भवतु मे सह तेन यूना
मिथ्यापवादवचसाप्यभिमानसिद्धिः ॥ १७९ ॥
— कस्यचित्

## अथान्यचतुरसखीवितर्कः

सिद्धान्तयति न किञ्चि-
द्भ्रमयति दृशामेव केवलं राधा ।

तदवगतं सखि लग्नं
कदम्बतरुदेवतामरुता ॥१८० ॥
— राज्ञस्य

अथ राधां प्रति प्रश्नः ।

कामं वपुः पुलकितं नयने धृतास्रे
वाचः सगद्गदपदाः सखि कम्पि वक्षः ।
ज्ञातं मुकुन्दमुरलीरवमाधुरी ते
चेतः सुधांशुवदने तरलीकरोति ॥१८१ ॥
— तस्यैव

गतं कुलवधूव्रतं विदितमेव तत्तद्वच-
स्तथापि तरलाशये न विमतासि को दुर्ग्रहः ।
करोमि सखि किं श्रुते दनुजवैरिवंशीरवे
मनागपि मनो न मे सुमुखि धैर्यमालम्बते ॥१८२ ॥
— कस्यचित्

आस्तां तावदकीर्तिर्मे
त्वया तथ्यं तु कथ्यताम् ।
चित्तं कथमिवासीत् ते
हरिवंशीरवश्रुतौ ॥१८३ ॥
— कस्यचित्

सत्यं जल्पसि दुःसहाः खलगिरः सत्यं कुलं निर्मलं
सत्यं निष्करुणोऽप्ययं सहचरः सत्यं सुदूरे सरित् ।
तत् सर्वं सखि विस्मरामि झटिति श्रोत्रातिथिर्जायते
चेदुन्मादमुकुन्दमञ्जुमुरलीनिस्वानरागोद्गतिः ॥१८४ ॥
— गोविन्दभट्टस्य

## अथ राधां प्रति सखीनर्माश्वासः

निशा जलदसङ्कुला तिमिरगर्भलीनं जग-

द्वयस्तव नवं नवं वपुरपूर्वलीलामयम् ।
अलं सुमुखि निद्रया व्रज गृहेऽपि नक्तं चरी
कदम्बवनदेवता नवतमालनीलद्युतिः ॥ १८५ ॥
— सर्वविद्याविनोदानाम्

## कृष्णं प्रति राधानुरागकथनम्

त्वामञ्जनीयति फलासु विलोकयन्ती
त्वां शृण्वती कुवलयीयति कर्णपूरम् ।
त्वां पूर्णिमाविधुमुखी हृदि भावयन्ती
वक्षोनिलीननवनीलमणिं करोति ॥ १८६ ॥
— कस्यचित्

गृहीतं ताम्बूलं परिजनवचोभिर्न सुमुखी
स्मरत्यन्तःशून्या मुरहर गतायामपि निशि ।
ततेवास्ते हस्तः कलितफणिवल्लीकिसलय-
स्तथवास्यं तस्याः क्रमुकफलफालीपरिचितम् ॥ १८७ ॥
— हरिहरस्य

प्रेमपावकलीढाङ्गी
राधां तव जगत्पते ।
शय्यायाः स्खलिता भूमौ
पुनस्तां गन्तुमक्षमा ॥ १८८ ॥
— श्रीकविचन्द्रस्य

मुरहर साहसगरिमा
कथमिव वाच्यः कुरङ्गशावाक्ष्याः ।
खेदार्णवपतितापि
प्रेममधुरां ते न सा त्यजति ॥ १८९ ॥
— कविचन्द्रस्य

गायति गीते शंसति वंशे

वादयति सा विपञ्चीषु ।
पाठयति पञ्जरशुकं तव
सन्देशाक्षरं राधा ॥१९० ॥
— गोवर्धनाचार्यस्य

## राधां प्रति कृष्णानुरागकथनम्

केलिकलासु कुशला नगरे मुरारे-
राभीरनीरजदृशः कति वा न सन्ति ।
राधे त्वया महदकारि तपो यदेष
दामोदरस्त्वयि परं परमानुरागः ॥१९१ ॥
— कस्यचित्

वत्सान् न चारयति वादयते न वेणु-
मामोदते न यमुनावनमारुतेन ।
कुञ्जे निलीय शिथिलं वलितोत्तमाङ्ग-
मन्तस्त्वया श्वसिति सुन्दरि नन्दसूनुः ॥१९२ ॥
— दैत्यारिपण्डितस्य ।

सर्वाधिकः सकलकेलिकलाविदग्धः
स्निग्धः स एष मुरशत्रुरनर्घरूपः ।
त्वां याचते यदि भज व्रजनागरि त्वं
साध्यं किमन्यदधिकं भुवने भवत्याः ॥१९३ ॥
— श्रीराङ्गस्य

## अथ राधाभिसारः

मन्दं निधेहि चरणौ परिधेहि नीलं
वासः पिधेहि वलयावलिमञ्चलेन ।
मा जल्प साहसिनि शारदचन्द्रकान्ति
दन्तांशवस्तव तमांसि समापयन्ति ॥१९४ ॥
— षाण्मासिकस्य ।

किमुत्तीर्णः पन्थाः कुपितभुजगीभोगविषमो
विषोढा भूयस्यः किमिति कुलपालीकटुगिरः ।
इति स्मारं स्मारं दरदलितशीतद्युतिरुचौ
सरोजाक्षी शोणं दिशि नयनकोणं विकिरति ॥ १९५ ॥
— सर्वविद्याविनोदानाम्

चित्रोत्कीर्णादपि विषधराद्भीतिभाजो रजन्यां
किं वा ब्रूमस्त्वदभिसरणे साहसं माधवास्याः ।
ध्वान्ते यान्त्या यदतिनिभृतं राधयात्मप्रकाश
त्रासात्पाणिः पथि फणिफणारत्नरोधी व्यधायी ॥ १९६ ॥
— कस्यचित्

## राधां प्रति सखीवाक्यम्

मन्मथोन्मथितमच्युतं प्रति
ब्रूहि किञ्चन समुल्लसत्स्मितम् ।
किं च सिञ्च मृगशावलोचने
लोचनेङ्गितसुधौघनिर्झरैः ॥ १९७ ॥
— कस्यचित्

गोविन्दे स्वयमकरोः सरोजनेत्रे
प्रेमान्धा वरवपुरर्पणं सखि ।
कार्पण्यं न कुरु दरावलोकदाने
विक्रीते करिणि किमङ्कुशे विवादः ॥ १९८ ॥
— कस्यचित्

## अथ क्रीडा

परमानुरागपरयाथ राधया
परिरम्भकौशलविकाशिभावया ।
स तया सह स्मरसभाजनोत्सवं
निरवाहयच्छिखिशिखण्डशेखरः ॥ १९९ ॥

— कविराजमिश्रस्य

अस्मिन् कुञ्जे विनापि प्रचलति पवनं वर्तते कोऽपि नूनं
पश्यामः किं न गत्वेत्यनुसरति गणे भीतभीतेऽर्भकाणाम् ।
तस्मिन् राधासखो वः सुखयतु विलसन् क्रीडया कैटभारि-
र्व्यातन्वानो मृगारिप्रवलघुरघुरारावरौद्रोच्चनादान् ॥ २०० ॥
— कस्यचित्

## अथ क्रीडानन्तरं तत्र जानतीनां सखीनां नर्मोक्तिः

इह निचुलनिकुञ्जे मध्यमध्यास्य रन्तु-
र्विजनमजनि शय्या कस्य बालप्रवालैः ।
इति निगदति वृन्दे योषितां पान्तु युष्मान्
स्मितशवलितराधामाधवालोकितानि ॥ २०१ ॥
— रूपदेवस्य

## अथ मुग्धबालवाक्यम्

कृष्ण त्वद्वनमालया सह कृतं केनापि कुञ्जान्तरे
गोपीकुन्तलबर्हदाम तदिदं प्राप्तं मया गृह्यताम् ।
इत्थं दुग्धमुखेन गोपशिशुनाख्याने त्रपानम्रयो
राधामाधवयोर्जयन्ति बलितस्मेरालसा दृष्टयः ॥ २०२ ॥
— लक्ष्मणसेनदेवस्य

## अथ राधया सह दिनान्तरे केलिः तत्र सखीवाक्यम्

अधुना दधिमन्थनानुबन्धं
कुरुषे किं गुरुविभ्रमालसाङ्गि ।
कलसस्तनि लालसीति कुञ्जे
मुरलीकोमलकाकली मुरारेः ॥ २०३ ॥
— समाहर्तुः

## अथ तस्याः साकूतवाक्यम्

श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः
स्वामी निःश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजनः ।
तद्दूरादयमञ्जलिः किमधुना दृग्भङ्गिभावेन ते
वैदग्धीविविधप्रबन्धरसिक व्यर्थोऽयमत्र श्रमः ॥ २०४ ॥
— कस्यचित्

सङ्केतीकृतकोकिलादिनिनदं कंसद्विषः कुर्वतो
द्वारोन्मोचनलोलशङ्खवलयक्वाणं मुहुः शृण्वतः ।
केयं केयमिति प्रगल्भजरतीवाक्येन दूनात्मनो
राधाप्राङ्गणकोणकोलिविटपिक्रोडे गता शर्वरी ॥ २०५ ॥
— हरस्य

आहूताद्य मयोत्सवे निशि गृहं शून्यं विमुच्यागता
क्षीवः प्रेष्यजनः कथं कुलवधूरेकाकिनी यास्यति ।
वत्स त्वं तदिमां नयालयमिति श्रुत्वा यशोदागिरो
राधामाधवयोर्जयन्ति मधुरस्मेरालसा दृष्टयः ॥ २०६ ॥
— श्रीमत्केशवसेनदेवस्य

गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदासला-
म् आश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥
२०७ ॥
— कस्यचित् दाक्षिणात्यस्य

## अथ सखीनर्म

सखि पुलकिनी सकम्पा
बहिःस्थलीतस्त्वमालयं प्राप्ता ।
विक्षोभितासि नूनं
कृष्णभुजङ्गेन कल्याणि ॥ २०८ ॥

— समाहर्तुः

## अथ पुनरन्येद्युरभिसारिका तत्र सखीवाक्यम्

अक्रान्तद्युतिभिर्वसन्तकुसुमैरुत्तंसयन् कुन्तला
नन्तः खेलति खञ्जरीटनयने कुञ्जेषु कुञ्जेक्षणः ।
अस्मान् मन्दिरकर्मतस्तव करौ नाद्यापि विश्राम्यतः
किं ब्रूमो रसैकाग्रणीरसि घटी नेयं विलम्बक्षमा ॥ २०९ ॥
— तस्यैव

## परीक्षणकारिणीं सखीं प्रति राधावाक्यम्

लज्जैवोद्घटिता किमत्र कुल्शोद्बद्धा कपाटस्थिति-
र्मर्यादैव विलङ्घिता पथि पुनः केयं कलिन्दात्मजा ।
आक्षिप्ता खलदृष्टिरेव सहसा व्यालावली कीदृशी
प्राणा एव समर्पिताः सखि चिरं तस्मै किमेषा तनुः ॥ २१० ॥
— कस्यचित्

द्वित्रैः केलिसरोरुहं त्रिचतुरैर्धम्मिल्लमल्लीस्रजं
कण्ठान् मौक्तिकमालिकां तदनु च त्यक्त्वा पदैः पञ्चमैः ।
कृष्णप्रेमविघूर्णितान्तरतया दूराभिसारातुरा
तन्वङ्गी निरुपायमध्वनि परं श्रेणीभरं निन्दति ॥ २११ ॥
— कस्यचित्

## अथ वासकसज्जा

तल्पं कल्पय दूति पल्लवकुलेरन्तर्लतामण्डपे
निर्बन्धं मम पुष्पमण्डनविधौ नाद्यापि किं मुञ्चति ।
पश्य क्रीडदमन्दमन्धतमसं वृन्दाटवीं तस्तरे
तद्गोपेन्द्रकुमारमत्र मिलितप्रायं मनः शङ्कते ॥ २१२ ॥
— श्रीरघुनाथस्य

## अथोत्कण्ठिता

सखि स विजितो वीणावाद्यैः कयाप्यपरस्त्रिया
पणितमभवत् ताभ्यां तव क्षपाललितं ध्रुवम् ।
कथमितरथा शेफालीषु स्खलत्कुसुमास्वपि
प्रसरति नभोमध्येऽपीन्दौ प्रियेण विलम्ब्यए ॥ २१३ ॥
— कस्यचित्

अरतिरियमुपैति मां न निद्रा
गणयति तस्य गुणान् मनो न दोषान् ।
विरमति रजनी न सङ्गमाशा
व्रजति तनुस्तनुतां न चानुरागः ॥ २१४ ॥
— कङ्कस्य

## अथ विप्रलब्धा

उत्तिष्ठ दूति यामो यामो
यातस्तथापि नायातः ।
याऽतः परमपि जिवे- ज्जीवितनाथो भवेत् तस्याः ॥ २१५ ॥
— तस्यैव

## अथ खण्डिता

लाक्षालक्ष्मललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागो घनः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥ २१६ ॥
— औत्कलस्य

## तस्या वाक्यम्

कृतं मिथ्याजल्पैर्विरम विदितं कामुक चिरात्
प्रियां तामेवोच्चैरभिसर यदीयैर्नखपदैः ।

विलासैश्च प्राप्तं तव हृदि पदं रगबहुलै-
र्मया किं ते कृत्यं ध्रुवमकुटिलाचारपरया ॥ २१७ ॥
— रुद्रटस्य

सार्धं मनोरथशतैस्तव धूर्त कान्ता
सैव स्थिता मनसि कृत्रिमभावरम्या ।
अस्माकमस्ति न हि कश्चिदिहावकाश-
स्तस्मात् कृतं चरणपातविडम्बनाभिः ॥ २१८ ॥
— तस्यैव

अनलङ्कृतोऽपि माधव
हरसि मनो मे सदा प्रसभम् ।
किं नालङ्कृतस्त्वं
सम्प्रति नखक्षतैस्तस्याः ॥ २१९ ॥
— विश्वनाथस्य

## खण्डनाप्तनिर्वेदायास्तस्या वाक्यम्

वय्तीताः प्रारम्भाः प्रणयबहुमानो विगलितो
दुराशा याता मे परिणतिरियं प्राणितुमपि ।
यथेष्टं चेष्टन्तां विरहिवधविख्यातयशसो
विभावा मय्येते पिकमधुसुधांशुप्रभृतयः ॥ २२० ॥
— पुरुषोत्तमदेवस्य

मा मुञ्च पञ्चशर पञ्चशरीं शरीरे
मा सिञ्च सान्द्रमकरन्दरसेन वायो ।
अङ्गानि तत्प्रणयभङ्गविगर्हितानि
नालम्बितुं कथमपि क्षमतेऽद्य जीवः ॥ २२१ ॥
— तस्यैव

## पुनः सायमायाति माधवे

कञ्चन वञ्चनचतुरे

प्रपञ्चय त्वं मुरान्तके मानम् ।
बहुवल्लभे हि पुरुषे
दाक्षिण्यं दुःखमुद्वहति ॥ २२२ ॥
— समाहर्तुः

## अथ मानिनी

भवतु विदितं छद्मालापैरलं प्रिय गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः ।
तव यथा तथाभूतं प्रेम प्रपन्नमिमां दशां
प्रकृतिचपले का नः पीडा गते हतजीविते ॥ २२३ ॥
— अमरोः

कस्त्वं तासु यदृच्छया कितव यास्तिष्ठन्ति गोपाङ्गनाः
प्रेमाणं न विदन्ति यास्तव हरे किं तासु ते कैतवम् ।
एषा हन्त हताशया यदभवं त्वय्य् एकताना परं
तेनास्याः प्रणयोऽधुना खलु मम प्राणैः समं यास्यति ॥ २२४ ।
— पुरुषोत्तमदेवस्य

## निष्क्रामति कृष्णे सखीवाक्यम्

साचिकन्धरममुं किमीक्षसे
यातु यातु सखि पूतनार्दनः ।
वामरीतिचतुरां हि पाम्रीं
सेवतां परमदेवतामिव ॥ २२५ ॥
— समाहर्तुः

## कृष्णदूतीवाक्यम्

प्रेमावगाहनकृते मानं मा कुरु चिराय करभोरु ।
नाकर्णि किं नु मुग्धे जातं पीयूषमन्थने गरलम् ॥ २२६ ॥

विधुमुखि विमुखीभावं भाविनि मद्भाषणे मा गाः ।

मूढे निगमनिगूढः कतिपयकल्याणतो मिलति ॥ २२७ ॥
— राङ्गस्यैतौ

## दूतीं प्रति राधावाक्यम्

अलमलमघृणस्य तस्य नाम्ना
पुनरपि सैव कथ गतः स कालः ।
कथय कथय वा तथापि दूति
प्रतिवचनं द्विषतोऽपि माननीयम् ॥ २२८ ॥
— अङ्गदस्य

## अथ कलहान्तरिता

## तां प्रति दक्षिणसखीवाक्यम्

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृद-
स्त्वयाकाण्डे मानः किमिति सरले प्रेयसि कृतः ।
समाकृष्टा ह्य् एते विरहदहनोद्भासुरशिखाः
स्वहस्तेनाञ्गारास्तदलमधुनारण्यरुदितैः ॥ २२९ ॥
— अमरोः

## अथ कर्कशसखीवाक्यम्

मानबन्धमभितः श्लथयन्ती
गौरवं न क् हलु हारय गौरि ।
आर्जवं न भजते दनुजारि-
र्वञ्चके सरलता न हि साध्वी ॥ २३० ॥
— समाहर्तुः

## तां प्रति राधावाक्यम्

भ्रूभङ्गो गुणितश्चिरं नयनयोरभ्यस्तमामीलनं
रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः ।
धैर्यं कर्तुमपि स्थिरीकृतमिदं चेतः कथञ्चिन् मया

बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवे स्थिता ॥ २३१ ॥
— अमरोः

जानामि मौनमलसाग्ङ्गि वचोविभङ्गी-
भंग्गीशतं नयनयोरपि चातुरीं च ।
आभीरनन्दनमुखाम्बुजसङ्गशंसी
वंशीरवो यदि न मामवशीकरोति ॥ २३२ ॥
— कस्यचित्

सत्यं शृणोमि सखि नित्यनवप्रियोऽसौ
गोपस्तथापि हृदयं मदनो दुनोति ।
युक्त्या कथञ्चन समं गमितेऽपि तस्मिन्
मां तस्य कालमुरली कवलीकरोति ॥ २३३ ॥
— श्रीमत्प्रभूनाम्

न जाने सम्मुखायाते
प्रियाणि वदति प्रिये ।
प्रयान्ति मम गात्राणि
श्रोत्रतां किमु नेत्रताम् ॥ २३४ ॥
कस्यचित् ।

मुरारिं पश्यन्त्याः सखि सकलमङ्गं न नयनं
कृतं यच् छृण्वन्त्याः हरिगुणगणं श्रोत्रनिचितम् ।
समं तेनालापं सपदि रचयन्त्या मुखमयं
विधातुर्नैवायं घटन्परिपाटीमधुरिमा ॥ २३५ ॥
— शरणस्य

## अथ सख्याः साभ्युसूयावाक्यम्

त्वमसि विशुद्धा सरले मुरलीवक्त्रस्त्रिधा वक्रः ।
भङ्गुरया खलु सुलभा तदुरः सखि वेजयन्त्य् एव ॥ २३६ ॥
— समाहर्तुः

## अथ क्षुभितराधिकोक्तिः

निःश्वासा वदनं दहन्ति हृदयं निर्मूलमुन्मथ्यते
निद्रा नेति न दृश्यते प्रियमुखं रात्रिन्दिवं रुद्यते ।
अङ्गं शोषमुपैति पादपतितः प्रेयांस्तथोपेक्षितः
सख्यः कं गुणमाकलय्य दयिते मानं वयं कारिताः ॥ २३७ ॥

— अमरोः

## मानजविरहेण ध्यायन्तीं तां प्रति कस्याश्चिद्वाक्यम्

आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा
नासाग्रे नयनं यदेतदपरं यच्चैकतानं मनः ।
मौनं चेदमिदं च शून्यमखिलं यद्विश्वमाभाति ते
तद्ब्रूयाः सखि योगिनी किमसि भोः किं वियोगिन्यपि ॥ २३८ ॥

— कस्यचित्

## तं प्रति राधावाक्यम्

सङ्गमविरहविकल्पे
वरमिह विरहो न तु सङ्गमस्तस्य ।
एकः स एव सङ्गे
त्रिभुवनमपि तन्मयं विरहे ॥ २३९ ॥

— कस्यचित्

## अथ कृष्णविरहः

सञ्जाते विरहे कयापि हृदये सन्दानिते चिन्तया
कालिन्दीतटवेतसीवनघनच्छायानिषण्णात्मनः ।
पायासुः कलकण्ठकूजितकला गोपस्य कंसद्विषो
जिह्वावर्जिततालुमूर्च्छितमरुद्विस्फारिता गीतयः ॥ २४० ॥

— कस्यचित्

## अथ राधाप्रसादनम्

शिरश्छायां कृष्णः स्वयमकृत राधाचरणयो-
र्भुजावल्लीच्छायामियमपि तदीयप्रतिकृतौ ।
इति क्रीडाकोपे निभृतमुभयोरप्यनुनय
प्रसादौ जीयास्तामपि गुरुसमक्षं स्थितवतोः ॥ २४१ ॥
— हरस्य

## कृष्णं प्रति राधासखीवाक्यम्

सा सर्वथैव रक्ता रागं
गुञ्जेव न तु मुखे वहति ।
वचनपटोस्तव रागः
केवलमास्ये शुकस्येव ॥ २४२ ॥
— गोवर्धनाचार्यस्य

सुभग भवता हृद्ये तस्या ज्वलत्स्मरपावके-
ऽप्यभिनिवेशता प्रेमाधिक्यं चिरात्प्रकटीकृतम् ।
तव तु हृदये शीतेऽप्य् एवं सदैव सुखाप्तये
मम सहचरी सा निःस्नेहा मनागपि न स्थिता ॥ २४३ ॥
— रुद्रस्य

## अथ दिनान्तरवार्ता

आगत्य प्रणिपातसान्त्वितसखीदत्तान्तरं सागसि
स्वैरं कुर्वति तल्पपार्श्वनिभृते धूर्तेऽङ्गसंवाहनम् ।
ज्ञात्वा स्पर्शवशात् तया किल सखीभ्रान्त्य् एव वक्षः शनैः
खिन्नासीत्यभिधाय मीलितदृशा सानन्दमारोपितः ॥ २४४
॥
— कस्यचित्

वस्तुतस्तु गुरुभीतया तया
व्यञ्जिते कपटमानकुट्मले ।

पेशलप्रियसखीदृशा हरि-
र्बोधितस्तटलतागृहं ययौ ॥ २४५ ॥

माधवो मधुरमाधवीलता
मण्डपे पटुरटन्मधुव्रते ।
संजगौ श्रवणचारु गोपिका
मानमीनवडिशेन वेणुना ॥ २४६ ॥
— कयोश्चिदिमौ

## पुष्पच्छलेन कृष्णमन्वेषयन्तीं राधां प्रति कस्याश्चिदुक्तिः

पन्थाः क्षेममयोऽस्तु ते परिहर प्रत्यूहसम्भावनाम्
एतन्मात्रमधारि सुन्दरि मया नेत्रप्रणालीपथे ।
नीरे नीलसरोजमुज्ज्वलगुणं तीरे तमालालङ्कारः
कुञ्जे कोऽपि कलिन्दशैलदुहितुः पुंस्कोकिलः खेलति ॥ २४७ ॥
— सर्वविद्याविनोदानाम्

## तत्र यमुनातीरे गतया राधया सह संकथा

का त्वं माधवदूतिका वदसि किं मानं जहीति प्रिये
धूर्तः सोऽन्यमना मनागपि सखि त्वय्यादरं नोज्झति ।
इत्यन्योन्यकथारसैः प्रमुदितां राधां सखीवेशवा-
न्नीत्वा कुञ्जगृहं प्रकाशिततनुः स्मेरो हरिः पातु वः ॥ २४८ ॥
— वासवस्य

वसन्तः सन्नद्धो विपिनमजनं त्वं च तरुणी
स्फुरत्कामावेशे वयसि वयमप्याहितपदाः ।
व्रज त्वं वा राधे क्षणमथ विलम्बस्व यदि वा
स्फुटं जातस्तावच् चतुरवचनानामवसरः ॥ २४९ ॥
— कस्यचित्

## तत्र राधावाक्यम्

स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी
क्षौणीमावृणुते तमालमलिनच्छायातमःसन्ततिः ।
तन् मे सुन्दर कृष्ण मुञ्च सहसा वर्त्मेति राधागिरः
श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥ २५०
॥

— कस्यचित्

## अथ स्वाधीनभर्तृका

मकरीविरचनभङ्ग्या
राधाकुचकलसमर्दनव्यसनी ।
ऋजुमपि रेखां लुम्पन्
वल्लववेशो हरिर्जयति ॥ २५१ ।

— कस्यचित्

## क्रीडानन्तरं कृष्णस्य स्वप्नायितम्

एते लक्ष्मण जानकीविरहिणं मां खेदयन्त्यम्बुदा
मर्माणीव च घट्टयन्त्यलममी क्रूराः कदम्बानिलाः ।
इत्थं व्याहृतपूर्वजन्मविरहो यो राधया वीक्षितः
सेर्ष्यं शङ्कितया स वः सुखयतु स्वप्नायमानो हरिः ॥ २५२
॥

— शुभाङ्कस्य

## अथ वंशीचौर्यम्

नीचैर्न्यासादथ चरणयोर्नूपुरं मूकयन्ती
धृत्वा धृत्वा कतकवलयान्युत्क्षिपन्ती भुजान्ते ।
मुद्रामक्ष्णोश्चकितं शश्वदालोकयन्ती
स्मित्वा स्मित्वा हरति मुरलीमङ्कतो माधवस्य ॥ २५३ ॥

— दैत्यारिपण्डितस्य

## तां प्रति राधावाक्यम्

अच्छिद्रमस्तु हृदयं परिपूर्णमस्तु
मौखर्यमस्तमितमस्तु गुरुत्वमस्तु ।
कृष्णप्रिये सखि दिशामि सदाशिषस्ते
यद्वासरे मुरलि मे करुणां करोषि ॥ २५४ ॥
— श्रीगोविन्दमिश्राणाम्

शून्यत्वं हृदये सलाघवमिदं शुष्कत्वमङ्गेषु मे
मौखर्यं व्रजनाथनामकथने दत्तं भवत्या निजम् ।
तत् किं नो मुरलि प्रयच्छसि स्रग्गोविन्दवक्त्रासवं
यं पीत्वा भुवनं वशे विदधती निर्लज्जमुद्गायसि ॥ २५५ ॥
— तेषामेव

## अथ सायं हरेर्व्रजागमनम्

मन्द्रक्वाणितवेणुरह्नि शिथिले व्यावर्तयन् गोकुलं
बर्हापीडकमुत्तमाङ्गरचितं गोधूलिधुम्रं दधत् ।
म्लायन्त्या वनमालया परिगतः श्रान्तोऽपि रम्याकृति-
र्गोपस्त्रीनयनोत्सवो वितरतु श्रेयांसि वः केशवः ॥ २५६ ॥
— कस्यचित्

## तत्र कस्याश्चिदुक्तिः

दृष्ट्या केशव गोपरागहतया किञ्चिन् न दृष्टं मया
तेनाद्य स्खलितास्मि नाथ पतितां किं नाम नालम्बसे ।
एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥ २५७ ॥
— कस्यचित्

नाभिदेशविनिवेशितवेणु-
र्धेनुपुच्छनिहितैककराब्जः ।
अन्यपाणिपरिमण्डितदण्डः

पुण्डरीकनयनो व्रजमाप ॥ २५८ ॥
— कस्यचित्

## तत्रैव राधायाः सौभाग्यम्

भ्रूवल्लीचलनैः कयापि नयनोन्मेषैः कयापि स्मित
ज्योत्स्नाविच्छुरितैः कयापि निभृतं सम्भावितस्याध्वनि ।
गर्वाद्भेदकृतावहेलविनयश्रीभाजि राधानने
सातङ्कानुनयं जयन्ति पतिताः कंसद्विषः दृष्टयः ॥ २५९ ॥
— उमापतिधरस्य

तिर्यक्कन्धरमंसदेशमिलितश्रोत्रावतंसं स्फुर-
द्बर्होत्तम्भितकेशपाशमनृजुभ्रूवल्लरीविभ्रमम् ।
गुञ्जद्वेणुनिवेशिताधरपुटं साकूतराधानन
न्यस्तामीलितदृष्टि गोपवपुषो विष्णोर्मुखं पातु वः ॥ २६० ॥
— लक्ष्मणसेनदेवस्य

अंसासक्तकपोलवंशवदनव्यासक्तबिम्बाधर
द्वन्द्वोदीरितमन्दमन्दपवनप्रारब्धमुग्धध्वनिः ।
ईषद्वक्रिमलोलहारनिकरः प्रत्येकरोकानन
न्यञ्चच्चञ्चदुदञ्चदङ्गुलिचयस्त्वां पातु राधाधवः ॥ २६१ ॥
— नाथोकस्य

अङ्गुष्ठाग्रिमयन्त्रिताङ्गुलिरसौ पादार्थनीरुद्धभू-
रार्द्रीकृत्य पयोधराञ्चलमलं सद्यः पयोबिन्दुभिः ।
न्यग्जानुद्वयमध्ययन्त्रितगह्टीवक्रान्तरालस्खल-
द्धाराध्वानमनोहरं सखि पयो गां दोग्धि दामोदरः ॥ २६२
॥
— शरणस्य

शाठान् यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्न् एव प्रशिथिलभुजग्रन्थिरभवः ।

तदेतत् क्वाचक्षे घृतमधुमय त्वद्बहुवचो
विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥ २६३ ॥
— कस्यचित्

## अथ गोवर्धनोद्धरणम्

सत्रासर्ति यशोदया प्रियगुणप्रीतेक्षणं राधया
लग्नैर्वल्लवसूनुभिः सरभसं सम्भावितात्मोर्जितैः ।
भीतानन्दितविस्मितेन विषमं नन्देन चालोकितः
पायाद्वः करपद्मसुस्थितमहाशैलः सलीलो हरिः ॥ २६४ ॥
— सोह्नोकस्य

एकेनैव चिराय कृष्ण भवता गोवर्धनोऽयं धृतः
श्रान्तोऽसि क्षणमास्स्व साम्प्रतममी सर्वे वयं दध्महे ।
इत्युल्लासितदोष्णि गोपनिवहे किञ्चिद्भुजाकुञ्चन
न्यञ्चच्छैलभरार्दिते विरुवति स्मेरो हरिः पातु वः ॥ २६५ ॥
— शरणस्य

खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः ।
भरभुग्नविततबाहुषु गोपेषु हसन् हरिर्जयति ॥ २६६ ॥
— सुबन्धोः

दूरं दृष्टिपथात् तिरोभव हरेर्गोवर्धनं विभ्रत-
स्त्वय्यासक्तदृशः कृशोदरि करस्रस्तोऽस्य मा भूदयम् ।
गोपीनामिति जल्पितं कलयतो राधानिरोधाश्रयं
श्वासाः शैलभरश्रमभ्रमकराः कंसद्विषः पान्तु वः ॥ २६७ ॥
— शुभाङ्कस्य

## अथ नौक्रीडा

कुरु पारं यमुनाया

मुहुरिति गोपीभिरुत्कराहूतः ।
तरितटकपटशयालु-
र्द्विगुणालस्यो हरिर्जयति ॥ २६८ ॥
— सञ्जयकविशेखरस्य

उत्तिष्ठारात् तरौ मे तरुणि मम तरोः शक्तिरारोहणे का
साक्षादाख्यामि मुग्धे तरणिमिह रवेराख्यया का रतिर्मे ।
वार्तेयं नौप्रसङ्गे कथमपि भविता नावयोः सङ्गमार्था
वार्तापीति स्मितास्यं जितगिरिमजितं राधयाराधयामि ॥
२६९ ॥

मुक्ता तरङ्गनिवहेन पतङ्गपुत्री
नव्या च नौरिति वचस्तव तथ्यमेव ।
शङ्कानिदानमिदमेव ममातिमात्रं
त्वं चञ्चलो यदिह माधव नाविकोऽसि ॥ २७० ॥
— समाहर्तुरिमौ

जीर्णा तरिः सरिदतीवगभीरनीरा
बाला वयं सकलमित्थमनर्थहेतुः ।
निस्तारबीजमिदमेव कृशोदराणां
यन् माधव त्वमसि सम्प्रति कर्णधारः ॥ २७१ ॥
— जगदाननदरायस्य

अम्भसि तरणिसुतायाः
स्तम्भिततरणिः स देवकीसुतः ।
आतरविरहितगोप्याः
कातरमुखमीक्षते स्मेरः ॥ २७२ ॥
— सूर्यदासस्य

वाचा तवैव यदुनन्दन गव्यभारो
हारोऽपि वारिणि मया सहसा विकीर्णः ।
दूरीकृतं च कुचयोरनयोर्दुकूलं

कूलं कलिन्ददुहितुर्न तथाप्यदूरम् ॥ २७३ ॥
— कस्यचित्

पयःपूरैः पूर्णा सपदि गतघूर्णा च पवनै-
र्गभीरे कालिन्दीपयसि तरिरेषा प्रविशति ।
अहो मे दुर्दैवं परमकुतुकाक्रान्तहृदयो
हरिर्वारं वारं तदपि करतालिं रचयति ॥ २७४ ॥
— मनोहरस्य

पानीयसेचनविधौ मम नैव पाणी
विश्राम्यतस्तदपि ते परिहासवाणी ।
जीवामि चेत् पुनरहं न तदा कदापि
कृष्ण त्वदीयतरणौ चरणौ ददामि ॥ २७५ ॥
— तस्यैव

इदमुद्दिश्य वयस्याः
स्वसमीहितदैवतं नमत ।
यमुनैव जानुदघ्नी
भवतु न वा नाविकोऽस्त्वपरः ॥ २७६ ॥
— मुकुन्दभट्टाचार्यस्य

तरिरुत्तरला सरिद्गभीरा
तरलो नन्दसुतश्च कर्णधारः ।
अबलाहमुपैति भानुरस्तं
सखि दूरे नगरीह किं करोमि ॥ २७७ ॥
— कस्यचित्

नापेक्षते स्तुतिकथां न शृणोति काकुं
शश्वत् कृतं न मनुते प्रणिपातजातम् ।
हा किं विधेयमधुना सखि नन्दसूनु-
र्मध्येतरङ्गिणि तरिं तरलो धुनोति ॥ २७८ ॥
— तस्यैव

एषोत्तुङ्गतरङ्गलङ्घिततटोत्सङ्गा पतङ्गात्मजा
पूर्णेयं तरिरम्बुभिर्न हि हरेः शङ्का कलङ्कादपि ।
काठिण्यं भज नाद्य सुन्दरि वयं राधे प्रसादेन ते
जीवामः स्फुटमातरीकुरु गिरिद्रोणीविनोदोत्सवम् ॥ २७९ ॥

काकुं करोषि गृहकोणकरीषपुञ्ज
गूढाङ्ग किं ननु वृथा कितव प्रयाहि ।
कुत्राद्य जीर्णतरणिभ्रमणातिभीत
गोपाङ्गनागणविडम्बनचातुरी ॥ २८० ॥
— त्रयः समाहर्तुः

## अथ राधया सह हरेर्वाकोवाक्यम्

अङ्गुल्या कः कवाटं प्रहरति कुटिले माधवः किं वसन्तो
नो चक्री किं कुलालो न हि धरणिधरः किं द्विजिह्वः फणीन्द्रः ।
नाहं घोराहिमर्दी किमसि खगपतिर्नो हरिः किं कपीशो
राधावाणीभिरित्थं प्रहसितवदनः पातु वश्चक्रपाणिः ॥ २८१ ॥
— कस्यचित्

कस्त्वं भो निशि केशवः शिरसिजैः य् किं नाम गर्वायसे
भद्रे शौरिरहं गुणैः पितृगतैः पुत्रस्य किं स्यादिह ।
चक्री चन्द्रमुखि प्रयच्छसि न मे कुण्डीं घटीं दोहनी-
मित्थं गोपवधूजितोत्तरतया ह्रीणो हरिः पातु वः ॥ २८२ ॥
— चक्रपाणेः

वासः सम्प्रति केशव क्व भवतो मुग्धेक्षणे नन्विदं
वासं ब्रूहि शठ प्रकामसुभगे त्वद्गात्रसंसर्गतः ।
यामिन्यामुषितः क्व धूर्त वितनुर्मुष्णाति किं यामिनी

शौरिर्गोपवधूं छलैः परिहसन्न् एवंविधैः पातु वः ॥ २८३ ॥
— कस्यचित्

राधे त्वं कुपिता त्वमेव कुपिता रुष्टासि भूमेर्यतो
माता त्वं जगतां त्वमेव जगतां माता न विज्ञोऽपरः ।
देवि त्वं परिहासकेलिकलहेऽनन्ता त्वमेवेत्यसौ
स्मेरो वल्लवसुन्दरीमवनमच् छौरिः श्रियः वः क्रियात् ॥
२८४ ॥
— हरिहरस्य

## अथ रासः

वृन्दारण्ये प्रमदसदने मल्लिकापुष्पमोदे
श्रीशुभ्रांशोः किरणरुचिरे कोकिलाद्यैर्मनोज्ञे ।
रात्रौ चित्रे पशुपवनिताचित्तदेहापहारी
कंसारातेर्मधुरमुरलीवाद्यराजो रराज ॥ २८५ ॥
— कस्यचित्

अधरामृतमाधुरीधुरीणो
हरिलीलामुरलीनिनाद एषः ।
प्रततान मनःप्रमोदमुच्चै- र्हरिणीनां हरिणीदृशां मुनीनाम् ॥
२८६ ॥
— श्रीमाधवेन्द्रपुरीपादानाम्

लीलामुखरितमुरली
कृतगोपभाविनीनिवहः ।
तदधरमधुनि सतृष्णः
कृष्णः पायादपायतो भवतः ॥ २८७ ॥
— माधवचक्रवर्तिनः

कारय नाम्ब विलम्बं
मुञ्च करं मे हरिं यामि ।

न सहे स्थातुं यदसौ
गर्जति मुरली प्रगल्भदूतीव ॥ २८८ ॥
— समाहर्तुः

चूडाचुम्बितचारुचन्द्रकचयं चामीकराभाम्बरं
कर्णोत्तंसितकर्णिकारकुसुमं कन्दर्पकल्लोलितम् ।
वंशीवादनवावदूकवदनं वक्रीभवद्वीक्षणं
भाग्यं भङ्गुरमध्यमाः परिणतं कुञ्जान्तरं ब्जेजिरे ॥ २८९ ॥
— जीवदासवाहिनीपतेः

## श्रीकृष्णवाक्यम्

दुष्टः कोऽपि करोति वः परिभवं शङ्के मुहुर्गोकुले
धावन्त्यः स्खलदम्बरं निशि वने यूयं यदभ्यागताः ।
आः का भीतिरमन्ददानववधूसिन्दूरमुद्राहरे
दोर्दण्डे मम भाति दीव्यत पतिक्रोडे कुरङ्गीदृशः ॥ २९० ॥

धूतोत्तापे वहति गहने धर्मपूरे व्रजान्तः
का वस्तृष्णा वलति हृदये दुर्मदेयं सतीनाम् ।
सीमन्तिन्यः स्पृहयत गृहान् मा विरुद्धं कुरुध्वं
नायं दृष्टौ मम विघटते हन्त पुण्यस्य पन्थाः ॥ २९१ ॥

## अथ व्रजदेवीनामुत्तरम्

कथं वीथीमस्मान् उपदिशसि धर्मप्रणयिनीं
प्रसीद स्वां शिष्यामतिखिलमुखीं शाधि मुरलीम् ।
हरन्ती मर्यादां शिव शिव परे पुंसि हृदयं
नयन्ती धृष्टेयं यदुवर यथा नाह्वयति नः ॥ २९२ ॥
— त्रयः समाहर्तुः

गोपीजनालिङ्गितमध्यभागं
वेणुं धमन्तं भृशलोलनेत्रम् ।
कलेवरे प्रस्फुटरोमवृन्दं

नमामि कृष्णं जगदेककन्दम् ॥ २९३ ॥
— श्रीपुरुषोत्तमदेवस्य

कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसं
गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम् ।
तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गते-
रक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ॥ २९४ ॥
— भट्टनारायणस्य

## कृष्णान्तर्धाने तासां प्रश्नः

तुलसि विलससि त्वं मल्लि जातासि फुल्ला
स्थलकमलिनि भृङ्गे सङ्गताङ्गी विभासि ।
कथयत बत सख्यः क्षिप्रमस्मासु कस्मिन्
वसति कपटकन्दः कन्दरे नन्दसूनुः ॥ २९५ ॥
— समाहर्तुः

दृष्टः क्वापि स माधवो व्रजवधूमादाय काञ्चिद्गतः
सर्वा एव हि वञ्चिताः सखि वयं सोऽन्वेषणीयो यदि ।
द्वे द्वे गच्छतमित्युदीर्य सहसा राधां गृहीत्वा करे
गोपीवेशधरो निकुञ्जकुहरं प्राप्तो हरिः पातु वः ॥ २९६ ॥
— कस्यचित्

## राधासखीवाक्यम्

अदोषाद्दोषाद्वा त्यजति विपिने तां यदि भाव-
नभद्रं भद्रं वा त्रिभुवनपते त्वां वदतु कः ।
इदं तु क्रूरं मे स्मरति हृदयं यत् किल तया
त्वदर्थं कान्तारे कुलतिलक नात्मापि गणितः ॥ २९७ ॥
— रामचन्द्रदासस्य

लक्ष्मीं मध्यगतेन रासवलये विस्तारयन्न् आत्मना
कस्तूरीसुरभिर्विलासमुरलीविन्यस्तवक्त्रेन्दुना ।

क्रीडाताण्डवमण्डलेन परितो दृष्टेन तुष्यद्दृशा
त्वां हल्लीशकशङ्कुसङ्कुलपदा पायाद्विहारी हरिः ॥ २९८ ॥
— कस्यचित्

## तत्र खेचराणामुक्तिः

मुक्तमुनीनां मृग्यं
किमपि फलं देवकी फलति ।
तत् पालयति यशोदा
निकाममुपभुञ्जते गोप्यः ॥ २९९ ॥
— दाक्षिणात्यस्य

तप्तं तपोभिरन्यैः
फलितं तद्गोपबालानाम् ।
आसां यत्कुचकुम्भे
नीलनिचोलयति ब्रह्म ॥ ३०० ॥
— श्रीरघुपत्युपाध्यायस्य

## अथ जलक्रीडा

जलकेलितरलकरतल
मुक्तपुनःपिहितराधिकावदनः ।
जगदवतु कोकयूनो-
र्विघटनसङ्घटनकौतुकी कृष्णः ॥ ३०१ ॥
— कस्यचित्

## राधासखीं प्रति चन्द्रावलीसख्याः सासूयवाक्यम्

मा गर्वमुद्वह कपोलतले चकास्ति
कृष्णस्वहस्तलिखिता नवमञ्जरीति ।
अन्यापि किं न सखि भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः ॥ ३०२ ॥
— दामोदरस्य

## राधासख्याः साकूतवाक्यम्

यदवधि गोकुलमभितः
समजनि कुसुमाचितासनश्रेणी ।
पीतांशुकप्रियेयं
तदवधि चन्द्रावली जाता ॥ ३०३ ॥
— गोवर्धनाचार्यस्य

## चन्द्रावलीं प्रति सखीवाक्यम्

सौजन्येन वशीकृता वयमतस्त्वां किञ्चिदाचक्ष्महे
कालिन्दीं यदि यासि सुन्दरि पुनर्मा गाः कदम्बाट्वईम् ।
कश्चित् तत्र नितान्तनिर्मलतमःस्तोमोऽस्ति यस्मिन् मना-
ग्लग्ने लोचनसीम्नि नोत्पलदृशः पश्यन्ती पत्युर्गृहम् ॥ ३०४ ॥
— गोविन्दभट्टस्य

श्यामोऽयं दिवसः पयोदपटलैः सायं तथाप्युत्सुका
पुष्पार्थं सखि यासि यामुनतटं याहि व्यथा का मम ।
किन्त्वेकं खरकण्टककक्षतमुरस्यालोक्य सद्योऽन्यथा
शङ्कां यत् कुटिलः करिष्यति जनो जातास्मि तेनाकुला ॥ ३०५ ॥
— कर्णपूरस्य

गन्तव्या ते मनसि यमुना वर्तते चेत् तदानीं
कुञ्जं मा गाः सहजसरले वाञ्जुलं मद्वचोभिः ।
गच्छेस्तत्राप्यहह यदि वा मा मुरारेरुदारे
कुत्राप्य् एका रहसि मुरलीनादमाकर्णयेथाः ॥ ३०६ ॥
— तैरभुक्तकवेः

तरले न कुरु विलम्बं
कुम्भं संस्मृत्य मन्दिरं याहि ।
यावन्न मोहनमन्त्रं

शंसति कंसद्विषो वंशी ॥ ३०७ ॥
— समाहर्तुः

पृष्ठेन नीपमवलम्ब्य कलिन्दजायाः
कूले विलासमुरलीं क्वणयन् मुकुन्दः ।
प्राक् पूरणात् कलसमम्भसि लोलयन्त्या
वक्त्रं विवर्तयति गोपकुलाङ्गनायाः ॥ ३०८ ॥
— कस्यचित्

सख्यो यदग्रगृहमहं कलसीं वहन्ती
पूर्णामतीवमहतीमनुलम्बितास्मि ।
एकाकिनीं स्पृशसि मां यदि नन्दसूनो
मोक्ष्यामि जीवनमिदं सहसा पुरस्ते ॥ ३०९ ॥
— समाहर्तुः

## तां प्रति कस्याश्चिदुक्तिः

वल्गान्त्या वनमालया तव हृतं वक्षोजयोश्चन्दनं
गण्डस्था मकरीघटा च मकरान्दोलेन विध्वंसिता ।
क्रान्ता स्वैरतरङ्गकेलिभिरियं तन्वी च धूर्ते तनुः
सत्यं जल्पसि भानुजामभि रसे मग्नाद्य हर्षादभूः ॥ ३१० ॥
— समाहर्तुः

## तद्भर्तारं प्रति सखीवाक्यम्

सुभग मम प्रियसख्याः
किमिव सशङ्कं मुहुर्विलोकयसि ।
यामुनपवनविकीर्ण
प्रियकरजःपिञ्जरं पृष्ठम् ॥ ३११ ॥
— समाहर्तुः

## चन्द्रावलीं प्रति तस्या वाक्यम्

कात्यायनीकुसुमकामनया किमर्थं

कान्तारकुक्षिकुहरं कुतुकाद्गतासि ।
पश्य स्तनस्तवकयोस्तव कण्टकाङ्कं
गोपः सुकण्ठि बत पश्यसि जातकोपः ॥ ३१२ ॥
— समाहर्तुरिमे

## अथ नित्यलीला

वृन्दावने मुकुन्दस्य नित्यलीला विराजते ।
स्पष्टमेषा रहस्यत्वाज्जानद्भिरपि नोच्यते ॥

ताभिर्नित्यविहारमेव तनुते वृन्दावने माधवो
गोष्ठाम्भोजमुखीभिरित्य भि मनाक् प्रोचे प्रियायै हरः ।
लीलारत्नरहस्यता व्रजपतेर्भूयस्यहो पश्य यत्
तत्त्वज्ञोऽपि पुरान्तरे च गमनं व्याचष्ट वैयासकिः ॥

तथा हि पाद्मे पार्वत्यै व्याजहार हरो रहः ।
गोगोपगोपिकासङ्गे यत्र क्रीडति कंसहा ॥

## अथ भाविनि हरेर्मथुराप्रस्थाने राधासखीवाक्यम्

अद्यैव यत् प्रतिपदुद्गतचन्द्रलेखा
सख्यं त्वया वपुरिदं गमितं वराक्याः ।
कृष्णे गते कुसुमसायक तत् प्रभाते
बाणावलिं कथय कुत्र विमोक्ष्यसि त्वम् ॥ ३१३ ॥
— रुद्रस्य

प्रस्थानं वलयैः कृतं प्रियसखैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।
गन्तुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवितप्रियसुहृत्सार्थः किमु त्यज्यते ॥ ३१४
॥
— अमरोः

## हरेर्मथुराप्रवेशे

छायापि लोचनपथं न जगाम यस्याः
सेयं वधूर्नगरमध्यमलङ्करोति ।
किं चापकलय्य मथुरानगरे मुकुन्दम्
अन्धोऽपि बन्धुकरदत्तकरः प्रयाति ॥ ३१५ ॥
— वाणीविलासस्य

## तत्र पुरस्त्रीवाक्यम्

अस्रमजस्रं मोक्तुं
धिङ् नः कर्णायते नयने ।
द्रष्टव्यं परिदृष्टं
तत् कैशोरं व्रजस्त्रीभिः ॥ ३१६ ॥
— तैरभुक्तस्य

सान्द्रानन्दमनन्तमव्ययमजं यद्योगिनोऽपि क्षणं
साक्षात् कर्तुमुपासते प्रतिदिनं ध्यानैकतानाः परम् ।
धन्यास्ता व्रजवासिनां युवतयस्तद्ब्रह्म याः कौतुका-
दालिङ्गन्ति समालपन्ति शतधाकर्षन्ति चुम्बन्ति च ॥ ३१७ ॥
— वाहिनीपतेः

प्रियसखि न जगाम वामशीलः
स्फुटममुना नागरेण नन्दसूनुः ।
अदलितनलिनीदलैव वापी
यदहतपल्लव एव काननान्तः ॥ ३१८ ॥
— कुमारस्य

यास्यामीति समुद्यतस्य वचनं विस्रब्धमाकर्णितं
गच्छन् दूरमपेक्षितो मुहुरसौ व्यावृत्य पश्यन्न् अपि ।
तच् छून्ये पुनरागतास्मि भवने प्राणास्त एव स्थिताः
सख्यः पश्यत जीवितप्रणयिनी दम्भादहं रोदिमि ॥ ३१९ ॥

— रुद्रटस्य

गतो यामो गतौ यामौ
गता यामा गतं दिनम् ।
हा हन्त किं करिष्यामि
न पश्यामि हरेर्मुखम् ॥ ३२० ॥

— शङ्करस्य

यमुनापुलिने समुत्क्षिप-
नटवेशः कुसुमस्य कन्दुकम् ।
न पुनः सखि लोकयिष्यते
कपटाभीरकिशोरचन्द्रमाः ॥ ३२१ ॥

— षष्ठीदासस्य

याः पश्यन्ति प्रियं स्वप्ने
धन्यास्ताः सखि योषितः
अस्माकं तु गते कृष्णे
गता निद्रापि वैरिणी ॥ ३२२ ॥

— धन्यस्य

सोऽयं वसन्तसमयो विपिनं तदेत-
सोऽयं निकुञ्जविटपी निखिलं तदास्ते ।
हा हन्त किं तु नवनीरदकोमलाङ्गो
नलोकि पुष्पधनुषः प्रथमावतारः ॥ ३२३ ॥

— सञ्जयकविशेखरस्य

युगायितं निमेषेण
चक्षुषा प्रावृषायितम् ।
शून्यायितं जगत् सर्वं
गोविन्दविरहेण मे ॥ ३२४ ॥

— श्रीभगवतः

दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते

वहति विकलः कायो मूर्च्छां न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसा-
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ३२५ ॥

भ्रमय जलदान् अम्भोगर्भान् प्रमोदय चातकान्
कलय शिखिनः केकोत्कण्ठान् कठोरय केतकान् ।
विरहिणि जने मूर्च्छां लब्ध्वा विनोदयति व्यथा
मकरुण पुनः संज्ञाव्याधिं विधाय किमीहसे ॥ ३२६ ॥
— एतौ भवभूतेः

दृष्टं केतकधूलिधूसरमिदं व्योम क्रमाद्वीक्षिताः
कच्चान्ताश्च शिलीन्ध्रकन्दलभृतः सोढाः कदम्बानिलाः ।
सख्यः संवृणुताश्रु मुञ्चत भयं कस्मान् मुदेवाकुला
एतान् अप्यधुनास्मि वज्रघटिता नूनं सहिष्ये धनान् ॥ ३२७ ॥
— रुद्रस्य

सेयं नदी कुमुदबद्भहुकरास्त एव
तद्यामुनं तटमिदं विपिनं तदेतत् ।
ते मल्लिकासुरभयो मरुतस्त्वमेव
हा प्राणवल्लभ सुदुर्लभतां गतोऽसि ॥ ३२८ ॥
— हरिभट्टस्य

यदुनाथ भवन्तमागतं
कथयिष्यन्ति कदा मदालयः ।
युगपत् परितः प्रधावितः
विकसद्भिर्वदनेन्दुमण्डलैः ॥ ३२९ ॥
— तैरभुक्तकवेः

अयि दीनदयार्द्र नाथ हे
मथुरानाथ कदावलोक्यसे ।
हृदयं त्वदलोककातरं

दयित भ्राम्यति किं करोम्यहम् ॥ ३३० ॥
— श्रीमाधवेन्द्रपुरीपादानाम्

प्रथयति न तथा ममार्तिमुच्चैः
सहचरि वल्लवचन्द्रविप्रयोगः ।
कटुभिरसुरमण्डलैः परीते
दनुजपतेर्नगरे यथास्य वासः ॥ ३३१ ॥
— श्रीरघुनाथदासस्य

चूताङ्कुरे स्फुरति हन्त नवे नवेऽस्मिन्
जीवोऽपि यास्यतितरां तरलस्वभावः ।
किं त्वेकमेव मम दुःखमभूदनल्पं
प्राणेश्वरेण सहितो यदयं न यातः ॥ ३३२ ॥
— राङ्गस्य

आशैकतन्तुमवलम्ब्य विलममाना
रक्षामि जीवमवधिर्नियतो यदि स्यात् ।
नो चेद्विधिः सकललोकहितैककारी
यत् कालकूटमसृजत् तदिदं किमर्थम् ॥ ३३३ ॥
— हरेः

प्रसर शिशिरामोदं कौन्दं समीर समीरय
प्रकटय शशिन्न् आशाः कामं मनोज समुल्लस ।
अवधिदिवसः पूर्णः सख्यो विमुञ्चत तत्कथां
हृदयमधुना किञ्चित् कर्तुं ममान्यदिहेच्छति ॥ ३३४ ॥
— रुद्रस्य

नायाति चेद्यदुपतिः सखि नैतु कामं
प्राणास्तदीयविरहाद्यदि यान्ति यान्तु ।
एकः परं हृदि महान् मम वज्रपातो
भूयो यदिन्दुवदनं न विलोकितं तत् ॥ ३३५ ॥
— हरिभट्टस्य

पञ्चत्वं तनुरेतु भूतनिवहाउ स्वांशे विशन्तु स्फुटं
धातारं प्रणिपत्य हन्त शिरसा तत्रापि याचे वरम् ।
तद्वापीषु पयस्तदीयमुकुरे ज्योतिस्तदीयाङ्गन
व्योम्नि व्योम तदीयवर्त्मनि धरा तत्तालवृन्तेऽनिलः ॥ ३३६ ॥
— षण्मासिकस्य

आश्लिष्य वा पादरतां पिनष्टु माम्
अदर्शनान् मर्महतां करोतु वा ।
यथा तथा वा विदधातु लम्पटो
मत्प्राणनाथस्तु स एव नापरः ॥ ३३७ ॥
— श्रीभगवतः

## मथुरायां यशोदास्मृत्या कृष्णवाक्यम्

ताम्बूलं स्वमुखार्धं चर्वितमितः को मे मुखे निक्षिपे-
दुन्मार्गप्रसृतं च चाटुवचनैः को मां वशे स्थापयेत् ।
एह्य् एहीति विदूरसारितभुजः स्वाङ्के निद्यायाधुना
केलिस्रस्तशिखण्डकं मम पुनर्व्याधूय बध्नातु कः ॥ ३३८ ॥
— तैरभुक्तस्य

## अथ श्रीराधास्मृत्या हरेर्वाक्यम्

यदि निभृतमरण्यं प्रान्तरं वाप्यपान्थं
कथमपि चिरकालं पुण्यपाकेन लप्स्ये ।
अविरलगलदस्रैर्घर्घरध्वानमिश्रैः
शशिमुखि तव शोकैः प्लावयिष्ये जगन्ति ॥ ३३९ ॥
— तैरभुक्तकवेः

## उद्धवं प्रति हरेर्वाक्यम्

विषयेषु तावदबला-
स्तास्वपि गोप्यः स्वभावमृदुवाचः ।

मध्ये तासामपि सा
तस्यामपि साचिवीक्षितं किमपि ॥ ३४० ॥
— कस्यचित्

## उद्धवेन राधायां हरेः सन्देशः

आविर्भावदिने न येन गणितो हेतुस्तनीयान् अपि
क्षीयेतापि न चापराधविधिना नत्या नयो वर्धते ।
पीयूषप्रतिवेदिनस्त्रिजगतीदुःखद्रुहं साम्प्रतं
प्रेम्णस्तस्य गुरोः कथं नु करवै वाङ्निष्ठतालाघवम् ॥ ३४१ ॥
— केषांचित्

आस्तां तावद्वचनरचनाभाजनत्वं विदूरे
दूरे चास्तां तव तनुपरीरम्भसम्भावनापि ।
भूयो भूयः प्रणतिभिरिदं किं तु याचे विधेया
स्मारं स्मारं स्वजनगणने क्वापि रेखा ममापि ॥ ३४२ ॥
— केशवभट्टाचार्याणाम्

## वृन्दावनं गच्छत उद्धवस्य वाक्यम्

इयं सा कालिन्दी कुवलयदलस्निग्धमधुरा
मदान्धव्याकूजतरलजलरङ्कुप्रणयिनी ।
पुरा यस्यास्तीरे सरभससतृष्णं मुरभिदो
गताः प्रायो गोपीनिधुवनविनोदेन दिवसाः ॥ ३४३ ॥
— दशरथस्य

पुरेयं कालिन्दी व्रजजनवधूनां स्तनतटी
तनूरागैर्भिन्ना चबलसलिलाभूदनुदिनम् ।
अहो तासां नित्यं रुदितगलितैः कज्जलजलै-
रिदानीं यातेऽस्मिन् द्विगुणमलिनाभून् मुररिपौ ॥ ३४४ ॥
— सर्वानन्दस्य

इदं तत् कालिन्दीपुलिनमिह कंसासुरभिदो

यशः शृण्वद्वक्रस्खलितकवलं गोकुलमभूत् ।
भ्रमद्वेणुक्वाणश्रवणमसृणोत्तारमधुर
स्वराभिर्गोपीभिर्दिशि दिशि समुद्घूर्णमनिशम् ॥ ३४५ ॥
— मोटकस्य

ताभ्यो नमो वल्लववल्लभाभ्यो
यासां गुणैस्तैरभिचिन्त्यमानैः ।
वक्षःस्थले निःश्वसितैः कदुष्णै-
र्लक्ष्मीपतेर्म्लायति वैजयन्ती ॥ ३४६ ॥
— कस्यचित्

## व्रजदेवीकुलं प्रत्युद्धववाक्यम्

वियोगिनीनामपि पद्धतिं वो
न योगिनो गन्तुमपि क्षमन्ते ।
यद्ध्येयरूपस्य परस्य पुंसो
यूयं गता ध्येयपदं दुरापम् ॥ ३४७ ॥
— कस्यचित्

## उद्धवे दृष्टे सखीं प्रति राधावाक्यम्

कल्याणं कथयामि किं सहचरि स्वैरेषु शश्वत् पुरा
यस्या नाम समीरितं मुररिपोः प्राणेश्वईति त्वया ।
साहं प्रेमभिदाभयात् प्रियतमं दृष्ट्वापि दूतं प्रभोः
सन्दिष्टास्मि न वेति संशयवती पृच्छामि नो किञ्चन ॥ ३४८ ॥
— रामचन्द्रदासस्य

## श्रीराधां प्रति उद्धववाक्यम्

मलिनं नयनाञ्जनाम्बुभि-
र्मुखचन्द्रं करभोरु मा कुरु ।
करुणावरुणालयो हरि-

स्त्वयि भूयः करुणां विधास्यति ॥ ३४९ ॥
— षष्ठीदासस्य

## उद्धवं प्रति राधासखीवाक्यम्

हस्तोदरे विनिहितैककपोलपाले-
रश्रान्तलोचनजलस्नपिताननायाः ।
प्रस्थानमङ्गलदिनावधि माधवस्य
निद्रालवोऽपि कुत एव सरोरुहाक्ष्याः ॥ ३५० ॥
— हरिहरस्य

## राधासख्या एव कृष्णे सन्देशः

निश्चन्दनानि वणिजामपि मन्दिराणि
निष्पल्लवानि च दिगन्तरकाननानि ।
निष्पङ्कजान्यपि सरित्सरसीकुलानि
जातानि तद्विरहवेदनया न शान्तम् ॥ ३५१ ॥
— तस्यैव

प्राणस्त्वं जगतां हरेरपि पुरा सङ्केतवेणुस्वना-
नादाय व्रजसुभ्रुवामिह भवान् मार्गोपदेशे गुरु ।
हंहो मथुरानिष्कुटानिल सखे सम्प्रत्यपि श्रीपते-
रङ्गस्पर्शपवित्रशीतिलतनुस्त्राता त्वमेकोऽसि नः ॥ ३५२ ॥
— रामचन्द्रदासस्य

## राधासख्या एव कृष्णे सन्देशः

त्वद्देशागतमारुतेन मृदुना सञ्जातरोमाञ्चया
त्वद्रूपाङ्कितचारुचित्रफलके सन्तर्पयन्त्या दृशम् ।
त्वन्नामामृतसिक्तकर्णपुटया त्वन्मार्गवातायने
तन्व्या पञ्चमगीतगर्भितगिरा रात्रिन्दिवं स्थीयते ॥ ३५३ ॥
— त्रिविक्रमस्य

अङ्गेऽनङ्गज्वरहुतवहश्चक्षुषि ध्यानमुद्रा

कण्ठे जीवः करकिशलये दीर्घशायी कपोलः ।
अंसे वेणी कुचपरिसरे चन्दनं वाचि मौनं
तस्याः सर्वं स्थितमिति न च त्वां विना क्वापि चेतः ॥ ३५४ ॥
— क्षेमेन्द्रस्य

दृष्टे चन्द्रमसि प्रलुप्ततमसि व्योमाङ्गनस्थेयसि
स्फूर्जन्निर्मलतेजसि त्वयि गते दूरं निजप्रेयसि ।
श्वासः कैरवकोरकीयति मुखं तस्याः सरोजीयति
क्षीरोदीयति मन्मथो दृगपि च द्राक् चन्द्रकान्तीयति ॥ ३५५ ॥
— भीमभट्टस्य

अस्यास्तापमहं उकुन्द कथयाम्य् एणीदृशस्ते कथं
पद्मिन्याः सरसं दलं विनिहितं यस्याः सतापे हृदि ।
आदौ शुष्यति सङ्कुचत्यनु ततश्चूर्णत्वमापद्यते
पश्चान् मुर्मुरतां दधद्दहति च श्वासावधूतः शिखी ॥ ३५६ ॥
— शान्तिकरस्य

उद्धूयेत तनूलतेति नलिनीपत्रेण नो बीज्यते
स्फोटः स्यादिति नाङ्गकं मलयजक्षोदाम्भसा सिच्यते ।
स्यादस्यातिभरात् पराभव इति प्रायो न वा पल्लवा-
रोपो वक्षसि तत् कथ कृशतनोरधिः समाधीयताम् ॥ ३५७ ॥
— आनन्दस्य

निवससि यदि तव हृदये
सा राधा वज्रघटितेऽस्मिन् ।
तत् खलु कुशलं तस्याः
स्मरविशिखैस्ताड्यमानयोः ॥ ३५९ ॥
— कस्यचित्

उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीडाकाननमाविशन्ति वलयक्काणैः समुत्रासय ।
इत्थं पल्लवदक्षिणानिलकुहूकण्ठीषु साङ्केतिक-
व्याहाराः सुभग त्वदीयविरहे राधासखीनां मिथः ॥ ३६० ॥
— शम्भोः

गलत्येका मूर्च्छा भवति पुनरन्या यदनयोः
किमप्यासीन् मध्यं सुभग निखिलायामपि निशि ।
लिखन्त्यास्तत्रास्याः कुसुमशरलेखं तव कृते
समाप्तिं स्वस्तीति प्रथमपदभागोऽपि न गतः ॥ ३६१ ॥
— शचीपतेः

चित्राय त्वयि चिन्तिते तनुभुवा चक्रे ततज्यं धनुर्-
वर्तिं धर्तुम् उपागतेऽङ्गुलियुगे बाणो गुणे योजितः ।
प्रारब्धे तव चित्रकर्मणि धनुर्मुक्तास्त्रभिन्ना भृशं
भित्तिं द्रागवलम्ब्य केशव चिरं सा तत्र चित्रायते ॥ ३६२ ॥
— बाणस्य

त्वामन्तःस्थिरभावनापरिणतं मत्वा पुरोऽवस्थितं
यावद्दोर्वलयं करोति रभसादग्रे समालिङ्गितुम् ।
तावत् तं निजम् एव देहमचिरादलिङ्ग्य रोमाञ्चितां
दृष्ट्वा वृष्टिजलच्छलेन रुदितं मन्ये पयोदैरपि ॥ ३६३ ॥
— कस्यचित्

अच्छिन्नं नयनाम्बु बन्धुषु कृतं तापः सखीष्वाहितो
दैन्यं न्यस्तमशेषतः परिजने चिन्ता गुरुभ्योऽर्पिता ।
अद्य श्वः किल निर्वृतिं व्रजति सा श्वासैः परैः खिद्यते
विस्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया ॥ ३६४ ॥
— रुद्रस्य

## अथास्या एव स्प्रणयेर्ष्यं जल्पितम्

मुखमाधुर्यसमृद्धा

परहृदयस्य ग्रहीतरि प्रसभम् ।
कृष्णात्मनि परपुरुषे
सौहृदकामस्य का शरीराशा ॥ ३६५ ॥
— जगन्नाथसेनस्य

## अथ व्रजदेवीनां सोत्प्रासः सन्देशः

वाचा तृतीयजनसङ्कटदुःस्थया किं
किं वा निमेषविरसेन विलोकितेन ।
हे नाथ नन्दसुत गोकुलसुन्दरीणा-
मन्तश्चरी सहचरी त्वयि भक्तिरेव ॥ ३६६ ॥
— कस्यचित्

मुरलीकलनिक्कणैर्या
गुरुलज्जाभरमप्यजीगणत् ।
विरहे तव गोपिकाः कथं
समयं ता गमयन्तु माधव ॥ ३६७ ॥
— षष्ठीदासस्य

मथुरापथिक मुरारे-
रुपगेयं द्वारि वल्लवीवचनम् ।
पुनरपि यमुनासलिले
कालियगरलानलो ज्वलति ॥ ३६८ ॥
— वीरसरस्वत्याः

## अथ द्वारवतीस्थस्य हरेर्विरहः

कलिन्दीमनुकूलकोमलरयाम् इन्दीवरश्यामलाः
शैलोपान्तभुवः कदम्बकुसुमैरामोदिनः कन्दरात् ।
राधां च प्रथमाभिसारमधुरां जातानुतापः स्मर-
न्नस्तु द्वारवतीपतिस्त्रिभुवनामोदाय दामोदरः ॥ ३६९ ॥
— शरणस्य

कामं कामयते न केलिनलिनीं नामोदते कौमुदी-
निस्यन्दैर्न समीहते मृगदृशामालापलीलामपि ।
सीदन्नेष निशासु निःसहतनुर्भोगाभिलाषालसै-
रङ्गैस्ताम्यति चेतसि व्रजवधूमाधाय मुग्धो हरिः ॥ ३७० ॥
— तस्यैव

रत्नच्छायाच्छुरितजलधौ मन्दिरे द्वारकाया
रुक्मिण्यापि प्रबलपुलकोद्भेदमालिङ्गितस्य ।
विश्वं पायान् मसृणयमुनातीरवानीरकुञ्जे
राधाकेलीपरिमलभरध्यानमूर्च्छा मुरारेः ॥ ३७१ ॥
— उमापतिधरस्य

निर्मग्नेन मयाम्भसि प्रणयतः पाली समालिङ्गिता
केनालीकमिदं तवाद्य कथितं राधे मुधा ताम्यसि ।
इत्युत्सवप्नपरम्परासु शयने श्रुत्वा गिरं शार्ङ्गिणो
रुक्मिण्या शिथिलीकृतः सकपतं कण्ठग्रहः पातु वः ॥ ३७२ ॥
— उमापतिधरस्य

## अथ वृन्दावनाधीश्वरीविरहगीतम्

याते द्वारवतीपुरं मुररिपौ तद्वस्त्रसंव्यानया
कालिन्दीतटकुञ्जवञ्जुललतामालाम्ब्य सोत्कण्ठया ।
उद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥ ३७३ ॥
— अपराजितस्य

## अथ व्रजदेवीनां सन्देशः

पान्थ द्वारवतीं प्रयासि यदि हे तद्देवकीनन्दनो
वक्तव्यः स्मरमोहमन्त्रविवशो गोप्योऽपि नामोज्झिताः ।
एताः केलिकदम्बधूलिपटलैरालोकशून्या दिशः
कालिन्दीतटभूमयो भवतो नायान्ति चित्तास्पदम् ॥ ३७४ ॥

— गोवर्धनाचार्यस्य

ते गोवर्धनकन्दराः स यमुनाकच्छः स चेष्टारसो
भाण्डीरः स वमस्पतिः सहचरास्ते तच्च गोष्ठाङ्गनम् ।
किं द्वारवतीभुजङ्ग हृदयं नायाति दोषैरपी-
त्यव्याद्वो हृदि दुःसहं व्रजवधूसन्देशशल्यं हरेः ॥ ३७५ ॥
— नीलस्य

कालिन्द्याः पुलिनं प्रदोषमरुतो रम्याः शशङ्कांशवः
सन्तापं न हरन्तु नाम नितरां कुर्वन्ति कस्मात्पुनः ।
सन्दिष्टं व्रजयोषितामिति हरेः संशृण्वतोऽन्तःपुरे
निःश्वासाः प्रसृता जयन्ति रमणीसौभाग्यगर्वच्छिदः ॥ ३७६
॥
— पञ्चतन्त्रकृतः

## मुदामानं प्रति श्रीद्वारकेश्वरवचनम्

मा गा इत्यपमङ्गलं व्रज सखे स्नेहेन शून्यं वचः
तिष्ठेति प्रभुता यथाभिलपितं कुर्वित्युदासीनता ।
ब्रूमो हन्त मुदाम मित्र वचनं नैवोपचारादिदं
स्मर्तव्या वयमादरेण भवता यावद्भवद्दर्शनम् ॥ ३७७ ॥
— हरेः

## स्वगृहादिकं दृष्ट्वा तस्य वचनम्

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः
सा धेनुर्जरती चरन्ति करिणामेता घनाभा घटाः ।
स क्षुद्रो मुषलध्वनिः कलमिदं सङ्गीतकं योषितां
चित्रं हन्त कथं द्विजोऽयमियतीं भूमिं समारोपितः ॥ ३७८
॥
— कस्यचित्

## अथ कुरुक्षेत्रे श्रीवृन्दावनाधीश्वरचेष्टितम्

येनैव सूचितनवाभ्युदयप्रसङ्गा
मीनाहतिस्फुरिततामरसोपमेन ।
अन्यन्निमील्य नयनं मुदितैव राधा
वामेन तेन नयनेन ददर्श कृष्णम् ॥ ३७९ ॥
— हरस्य

आनन्दोद्गतबाष्पपूरपिहितं चक्षुः क्षमं नेक्षितुं
बाहू सीदत एव कम्पविधुरौ शक्तौ न कण्ठग्रहे ।
वाणी सम्भ्रमगद्गदाक्षरपदा संक्षोभलोलं मनः
सत्यं वल्लभसङ्गमोऽपि सुचिराज्जातो वियोगायते ॥ ३८० ॥
— शुभ्रस्य

## अथ रहस्यनुनयन्तं कृष्णं प्रति

किं पादान्ते लुठसि विमनाः स्वामिनो हि स्वतन्त्राः
कञ्चित् कालं क्वचिदभिरतस्तत्र कस्तेऽपराधः ।
आगस्कारिण्यहमिह यया जीवितं तद्वियोगे
भर्तृप्राणाः स्त्रिय इति ननु त्वं ममैवानुनेयः ॥ ३८१ ॥
— कस्यचित्

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ ३८२ ॥
— कस्यचित्

प्रियः सोऽयं कृष्णः सहचरि कुरुक्षेत्रमिलित-
स्तथाहं सा राधा तदिदमुभयोः सङ्गमसुखम् ।
तथाप्यन्तःखेलन्मधुरमुरलीपञ्चमजुषे
मनो मे कालिन्दीपुलिनविपिनाय स्पृहयति ॥ ३८३ ॥
— समाहर्तुः

## समाप्तौ मङ्गलाचरणम्

मुग्धे मुञ्च विषादमत्र बलभित्कम्पो गुरुस्त्यज्यतां
सद्भावं भज पुण्डरीकनयने मान्यानिमान् मानय ।
लक्ष्मीं शिक्षयतः स्वयंवरविधौ धन्वन्तरेर्वाक्छला-
दित्यन्यप्रतिषेधमात्मनि विधिं शृण्वन् हरिः पातु वः ॥ ३८४ ॥

— कस्यचित्

यदुवंशावतंसाय
वृन्दावनविहारिणे ।
संसारसागरोत्तार
तारये हरये नमः ॥ ३८५ ॥

— अविलम्बसरस्वत्याः

भ्राम्यद्भास्वरमन्दराद्रिशिखरव्याघट्टनाद्विस्फुर-
त्केयूराः पुरुहूतकुञ्जरकरप्राग्भारसंवर्धिनः ।
दैत्येन्द्रप्रमदाकपोलविलसत्पत्राङ्कुरच्छेदिनो
दोर्दण्डाः कलिल्कालकल्मषमुषः कंसद्विषो पातु वः ॥ ३८६ ॥

— योगेश्वरस्य

जयदेवबिल्वमङ्गलमुखैः
कृता येऽत्र सन्ति सन्दर्भाः ।
तेषां पद्यानि विना
समाहृतानीतराण्यत्र ॥ ३८७ ॥

लसदुज्ज्वलरसस्तमना
गोकुलकुलपालिकालिनीवलितः ।
यदभीप्सितमभिदद्या-
त्तरुणतमालकल्पपादपः कोऽपि ॥ ३८८ ॥

## इति श्रीमद्रूपगोस्वामिसमाहृता पद्यावली समाप्ता ।

Some supplementary verses found at the end of several MSS:

लर्गे कृतं न सुकृतं मया कृतमहो महादुष्कृतं
कृतान्तनगरे गतिर्भवतु मे तत्र कीदृशी ।
न भो न दिनभोगदिग्भ्रमणमस्मात् परं पुन-
स्तथा कुरु यथा तटे तव घटेत वासो मम ॥

राधाधरसुधाधार
धरायाद्यरसश्रिये ।
गोपालपुरराज्ञाय
नमः पीताम्बराय ते ॥